काननारोपणानि च ॥ एत० ॥ ३४ ॥ अश्वत्थ-तुलसी-धात्री
सेवते यो नरः सदा ॥ एत० ॥ ३५ ॥ शिवं विष्णुं गणेशं च
शक्तिं सूर्यं च पूजनम् ॥ एत० ॥ ३६ ॥ गोहत्यादिसहस्राणि
ब्रह्महत्यास्तथैव च ॥ एत० ॥ ३७ ॥ मुच्यते सर्वपापेभ्यो
दत्त इत्यक्षरद्वयम् ॥ ३८ ॥ स्वर्णस्तेयं सुरापानं मातागमन-
किल्बिषम् ॥ मुच्यते० ॥ ३९ ॥ स्त्रीहत्यादिकृतं पापं बाल-
हत्यास्तथैव च ॥ मुच्यते० ॥ ४० ॥ प्रायश्चित्तं कृतं तेन सर्व-
पापप्रणाशनम् ॥ ब्रह्मत्वं लभ्यते ज्ञानं 'दत्त' इत्यक्षरद्वयम्
॥ ४१ ॥ कलिदोषविनाशार्थं जपेदेकाग्रमानसः ॥ श्रीगुरुं पर-
मानंदं दत्त० ॥ ४२ ॥ दत्त दत्त त्विदं वाक्यं तारकं सर्वदे-
हिनाम् ॥ श्रद्धायुक्तो जपेन्नित्यं दत्त० ॥ ४३ ॥ केशवं माधवं

विष्णुं गोविंदं गोपतिं हरिम् ॥ गुरूणां पठ्यते नित्यं तत्सर्वं च शुभावहम् ॥४४॥ निरंजनं निराकारं देवदेवं जनार्दनम् ॥ मायायु(मु)क्तं जपेन्नित्यं पावनं सर्वदेहिनां ॥४५॥ आदिनाथं सुरश्रेष्ठं कृष्णं श्यामं जगद्गुरुम् ॥ सिद्धराजं गुणातीतं रामं राजीवलोचनम् ॥ ४६ ॥ नारायणं परंब्रह्म लक्ष्मीकांतं परात्परम् ॥ अप्रमेयं सुरानंदं नमो दत्तदिगंबरम् ॥ ४७ ॥ योगिराजोऽत्रिवरदः सुराध्यक्षो गुणांतकः ॥ अनुसूयात्मजो देवो देवो गतिप्रदायकः ॥ ४८ ॥ गोपनीयं प्रयत्नेन यदि देवमुनीश्वरैः समस्तऋषिभिः सर्वैर्भक्त्याा स्तुत्वा महात्मभिः ॥ ४९ ॥ नारदेन सुरेंद्रेण सनकाद्यैर्महात्मभिः ॥ गौतमेन च गार्गेण व्यासेन कपिलेन च ॥ ५० ॥ वामदेवेन दक्षेण अत्रि-भार्गव-मुद्गलैः ॥ वसिष्ठप्रमुखैः सर्वैर्गीयते सर्वदाऽदरात् ॥ ५१ ॥ विनायकेन रुद्रेण महासेनेन वै सदा ॥ मार्कंडेयेन धौम्येन कीर्तितं स्तवमुत्तमम् ॥ ५२ ॥ मरीच्यादिमुनींद्रैश्च शुक-कर्दमसत्तमैः ॥ अंगिराक्रतपौलस्त्य-भृगु-कश्यप-जैमिनी ॥ ५३ ॥ गुरुस्तवमधीयानो विजयी सर्वदा भवेत् ॥ गुरोः सायुज्यमाप्नोति गुरोर्नाम पठेद्बुधः ॥ ५४ ॥ गुरोः परतरं नास्ति सत्यं सत्यं न संशयः ॥ गुरोः पादोदकं पीत्वा गुरुनाम सदा जपेत् ॥ ५५ ॥ तेऽपि सन्यासिनो ज्ञेया इतरे वेषधारिणः ॥ गंगाद्याः सरितः सर्वे गुरोः पादांबुजे सदा ॥ ५६ ॥ गुरुस्तवं नजानाति गुरुनाम मुखे नहि ॥ पशुतुल्यं विजानीयात्सत्यं सत्यं महामुने ॥ ५७ ॥ इति स्तोत्रं

महादिव्यं स्तवराजं मनोहरम् ॥ पठणाच्छ्रवणाद्वापि सर्वान्कामानवाप्नुयात् ॥५८॥ ॥ इति श्रीमन्महादेव-शुकसंवादे दत्तस्तवराजं संपूर्णम् ॥ श्रीदत्तात्रेयार्पणमस्तु ॥ ॥ १२ ॥



---

## अथ श्रीदत्ताष्टकम्.

श्रीदत्तात्रेयाय नमः ॥ आदौ ब्रह्ममुनीश्वरं हरिहरं सत्वं-रजस्तामसम् ब्रह्मांडं च त्रिलोकपावनकरं त्रैमूर्तिरक्षाकरम् ॥ भक्तानामभयार्थरूपसहितं सोहं स्वयं भावयन्सोहं दत्तदिगंबरं वसतु मे चित्ते महत्सुंदरम् ॥ १ ॥ विश्वं विष्णुमयं स्वयं शिवमयं ब्रह्मामुनींद्रामयं ब्रह्मेंद्रादिसुरोगणार्चितमयं सत्यं समुद्रामयम् ॥ सप्तं लोकमयं स्वयं जनमयम् मध्यादिवृक्षामयं सोहं दत्तदिगंबरं-वसतु मे चित्ते महत्सुंदरम् ॥२॥ आदित्यादिग्रहा स्वधाऋषिगणं वेदोक्तमार्गे स्वयं वेदं शास्त्र-पुराणपुण्यकथितं ज्योतिस्वरूपं शिवम् ॥ एवं शास्त्रस्वरूपया त्रयगुणैस्त्रैलोक्यरक्षाकरं सोहं दत्तदिगंबरंव० ॥३॥ उत्पत्ति-स्थिति-नाशकारणकरं कैवल्यमोक्षाकरं कैलासादिनिवासिनं शशिधरं रुद्राक्षमालागळम् ॥ हस्ते चाप-धनुःशराश्च मुसलं खट्वांगचर्माधरं सोहं दत्तदिगंबरंव० ॥४॥ शुद्धं चित्तमयं सुवर्णमयदं बुद्धिं प्रकाशंमयं भोग्यं भोगमयं निराहतमयं मुक्तिप्रसन्नामयम् ॥ दत्तं दत्तमयं दिगंबरमयं ब्रह्मांडसाक्षात्करं सोहं दत्तदिगंबरंव० ॥ ५ ॥ सोहंरूपमयं परात्परमयं निःसंगनिर्लिप्तकं नित्यं शुद्धनिरंजनं निजगुरुं नित्योत्सवं मंगलम् ॥ सत्यं ज्ञानमनंतब्रह्महृदयं व्याप्तं परो-

दैवतं सोहं दत्तदिगंबरं वसतु मे० ॥ ६ ॥ काषायं करदंडधारं-पुरुषं रुद्राक्षमालागलं भस्मोत्धूलितलोचनं कमलजं कोल्हा-पुरीभिक्षणम् ॥ काशीस्नानजपादिकं यतिगुरुं तन्माहुरीवासितं सोहं दत्तदिगंबरं वसतु मे० ॥ ७ ॥ कृष्णातीरनिवासिनं निज-पदं भक्तार्थसिद्धिप्रदं मुक्तिं दत्तदिगंबरं यतिगुरुं नास्तीति लोकांजनम् ॥ सत्यं सत्यमसत्यलोकमहिमाप्राप्तव्यभाग्योदयं सोहं दत्तदिगंबरं वसतु मे चित्ते महत्सुंदरम् ॥ ८ ॥ इति श्रीशंकराचार्यकृतं दत्ताष्टकं संपूर्णम् ॥ ॥ १३ ॥ ॥



---

## अथ श्रीदत्तोपनिषत् (पूर्वतापिनी.)



श्रीगणेशाय नमः ॥ हरिः ॐ भद्रंकर्णेभिःश्रृणुयामदेवाभद्रंपश्ये-माक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्वैश्येम देवहितं यदायुः ॥ भद्रंकर्णेभिरिति शांतिः ३ ॥ ॐ चिन्मयं व्यापितं सर्वं आकाशं जगदीश्वरम् ॥ निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमा-श्रमम् ॥ १ ॥ निराकारं निराभासं निरालंबं निरंजनम् ॥ निःशब्द उच्यते ब्रह्म तस्याहं पंचमाश्रमम् ॥ २ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतीश्वरः ॥ आश्रमाणां विभिन्नोहं तस्याहं पंचमाश्रमम् ॥ ३ ॥ आश्रमाणां च सर्वेषां अस्ति नास्ति न चात्मनि ॥ भिन्नाभिन्नं नपश्यंति तस्याहं पंचमाश्रमम् ॥ ४ ॥ आब्रह्मस्तंभपर्यंतं संपूर्णं परमात्मनः ॥ भिन्नाभिन्नं नपश्यंति तस्याहं पंचमाश्रमम् ॥ ५ ॥ मनस्यं मनमध्यस्थं मनमाया-विवर्जितम् ॥ मनसा मन आलोक्य तस्याहं पंचमाश्रमम् ॥ ६ ॥

अगोचरं चैकब्रह्म तस्य देहे विलीयते ॥ निवर्तंते क्रियाः सर्वास्तस्याहं पंचमाश्रमम् ॥ ७ ॥ निरालंबपदं प्राप्तं यत्र ज्योतिर्लयं गतः ॥ निवर्तंते क्रियाः सर्वास्तस्याहं पंचमाश्रमम् ॥८॥ स्वयं दाता स्वयं भोक्ता स्वयं देवो महेश्वरः ॥ निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम् ॥ ९ ॥ क्वचिद्योगी क्वचिद्भोगी क्वचिन्नग्नः पिशाचवत् ॥ स्वयमात्मस्वरूपेण तस्याहं पंचमाश्रमम् ॥ ॥ १० ॥ अभिन्नमात्मनो रूपं जगदेतच्चराचरम् ॥ निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम् ॥ ११ ॥ आत्मज्ञानं विना योगी ब्रह्मचारी कथं भवेत् ॥ गृही वा वानप्रस्थो वा यतिर्योगं विना नहि ॥ १२ ॥ ॐ भद्रंकर्णेभिःशृणुयामदेवा भद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदा



युः ॥ स्वस्तिनइंद्रोवृद्धश्रवाः ॥ ॐ शांतिःशांतिःशांतिः ॥ ॥ इति श्रीदत्तोपनिषत् पूर्वतापिनी समाप्ता ॥ ॥ १४ ॥

---

## अथ श्रीदत्तोपनिषत् (उत्तरतापिनी.)

श्रीगणेशाय नमः ॥ सहनाववत्विति शांतिः ३ ॥ तस्य क्षेत्रे ब्रह्मा नारायणं प्रणिपत्याह ॥ अधीहि भगवान् योगाविद्यारहस्यम् ॥ यस्मिन् विदिते योगी भोगी भवति ॥ इत्युक्त्वा सत्यानंदचिदात्मकेवलसात्विकं मामकं धामोपास्येति ब्रह्माणमाह ॥ सदा दत्तोहमेतत्पदं ये वदंति न ते संसारिणो भवंति ॥ ॐमित्येकाक्षरम् ॥ दत्तात्रेयाय चतुरक्षरम् ॥ श्रीदेवदत्तेति पंचमाक्षरम् ॥ य इमानि विद्यानामानि दशवारमुच्चरेत् ॥ बिश्वरूप-

धरो विष्णुर्नारायणो दत्तात्रेयस्तस्मिन् भगवान् प्रसीदति ॥
दशमेषु दिवसेषु स्वप्नरूपं प्रदर्शयति ॥ अथ एकाक्षरं व्या-
ख्यास्ये ॥ 'दत्त' शब्दमुच्चार्य रेफं सबिंदुकम् वदेत् ॥ ऱ्हामिति
ऱ्हस्वो भवति ॥ इमं मंत्रं जप्त्वा वेदव्यासो भगवान् अष्टाद-
शपुराणानि चकार ॥ दक्षिणामूर्तिबीजमुक्त्वा रामबीजं वदेत् ॥
द्रामित्येकाक्षरमंत्रो भवति ॥ तदेतत्तारकं भवति ॥ तदेवोपा-
सितव्यमिति ज्ञेयम् ॥ मंत्रमिमं जप्त्वा नमातृगर्भं प्रविशति॥
ब्रह्मा-विष्णु-शिवात्मकमिदमेकाक्षरम् ॥ सर्वदा जप्यमिदं नदेश-
कालनियमोत्र विद्यते ॥ एतन्मंत्रजपमेव मुख्यः क्रियायोगः ॥
अनेन सच्चिदानंदब्रह्मैव भवति ॥ न स पुनरावर्तते न स
पुनरावर्तते ॥ वटबीजवृक्षस्यैव दत्तबीजस्थं सर्वजगत्रयमेतत् ॥



ॐ मिति प्रथमम् ॥ श्रीमिति द्वितीयम् ॥ ऱ्हामिति तृती-
यम् ॥ क्लीमिति चतुर्थम् ॥ ग्लौमिति पंचमम् ॥ ब्रह्मा-विष्णु-
शिवात्मकं दत्तैकाक्षरं षष्ठम् ॥ षडक्षरमयं भवति, सर्वसंपत्स-
मृद्धिकारी भवति, योगानंदःप्राप्तो भवति, एतन्मंत्रजपेन राजा
भवति, त्रयाणां शबररूपी सदाशिवो ऋषिः, गायत्रीच्छंदः, दत्ता-
त्रेयो देवता, द्रामिति प्रथमं व्याहरेत्, दत्तात्रेयायेति पश्चात्,
नम इत्यष्टाक्षरमंत्रो भवति ॥ गायत्रीच्छंदः, दत्तात्रेयो देवता,
मनुमेनं जप्त्वा दत्तात्रेयाय इति सत्यानंदचिदात्मकं नम इति
पूर्णानंदचिदात्मकं विग्रहं पश्यति ॥ ॐकारमादौ ब्रूयात् ॥ सानु-
स्वरं द्वितीयं स्वरं वदेत् ॥ ऱ्हीमिति पश्चात् ॥ क्रोमिति चतु-
र्थम् ॥ एहीति वदेत् ॥ दत्तात्रेयायेति संबुद्धिः ॥ स्वाहेति

मंत्रराजोयं द्वादशाक्षरः ॥ जगतीच्छंदः, सदाशिवो ऋषिः, दत्ता-
त्रेयो देवता, ॐबीजं, स्वाहा शक्तिः, संबुद्धिः कीलकम्, ॐ
आमिति हृदये, ऱ्हींक्रोमिति शिरसि, एहीति शिखायां, दत्तेति
कंठे, आत्रेयायेति नेत्रे, स्वाहेत्यस्त्रम्, तन्मंत्रमयो भवति ॥
अक्षरलक्षजपाद्देवतासाक्षात्कारो भवति ॥ इंद्रपुरोगमास्त्रयस्त्रिं-
शत्कोटिदेवताः प्रसन्ना भवंति ॥ सप्तकोटिमुनीश्वराः नव-
कोटिसिद्धगंधर्वादयश्च प्रसीदंति ॥ अणिमाद्यष्टकं सिध्यति ॥
ब्रम्हा-विष्णु-महेश्वर-देवलोकेषु संचारो भवति ॥ कोटिशो यो
मंत्रो जपति दत्तात्रेयसमानो भवति ॥ अक्षरकोटिसंख्याकं
मंत्रं जपति स जरा-मरणहीनः सिद्धो भवति ॥ परकायप्रवेश-
सामर्थ्यं लभते ॥ अत्रैते श्लोका भवंति—खड्गस्तंभो जलस्तंभो



सेनास्तंभस्तथैव च ॥ इच्छासिद्धिर्वशित्वं च दिक्पालैः सह भा-
षणम् ॥ वायुवद्गातिरित्याहुराल्हादित्वं च सोमवत् ॥ अग्निवत्स-
र्वभक्षत्वं नित्यतृप्तित्वमेव च ॥ सर्वभाषापरिज्ञानं सर्वचित्ताव-
बोधनम् ॥ वापी-कूप-समुद्राणां पर्वतानां च चालनम् ॥ दत्ता-
त्रेयमयो स्वच्छो व्यासतुल्यो भवेदिति ॥ षोडशाक्षरं व्याख्या-
स्ये ॥ प्राणो देयो मनो देयं चक्षुर्देयं च खंडशः ॥ शरीरं हित्वा
(शरीरयित्वा)वा देयम्-षोडशाक्षरमंत्रो नदेयो भवति ॥ अति-
सेवापरो भक्तिगुणवत्सच्छिष्याय वदेत् ॥ ॐ मिति बीजं प्रथमं
भवति, ऐमिति द्वितीयम्, क्रामिति तृतीयम्, क्रीमिति चतुर्थम्
क्लूमिति पंचमम्, ऱ्हामिति षष्ठम्, ऱ्हीमिति सप्तमम्, ऱ्हूमित्य-
ष्टमम्,सौरिति नवमम्, दत्तात्रेयायेति चतुर्दशम्, नम इति षोड-

शम् ॥ ॐ बीजं, नमःशक्तिः, दत्तात्रेयायेति कीलकम्॥ॐ ऐमिति ह्रदये ॥ क्रांक्रींक्लूमितिशिरसि ॥ ऱ्हां ऱ्हीं ऱ्हूमिति शिखायाम् ॥ सौरिति कवचे ॥ दत्तात्रेयायेति चक्षुषि॥नम इति अस्त्रं॥ यो नित्यमधीयानः सच्चिदानंदस्वरूपे स्फुरति मुक्तिर्भवति सौरित्यंते विष्णुवन्नित्युच्यते ॥ तज्जपे श्रीविष्णुरूपी भवति ॥ अथानुष्टुभं व्याख्यास्ये ॥ सर्वमंत्रसंबुद्धिर्नामानि इत्युच्यते ॥ दत्तात्रेय हरे कृष्ण उन्मत्तानंददायक ॥ दिगंबर मुने बालपिशाचज्ञानसागरः ॥ सागरेत्युपनिषत् ॥ ॥ ॥ अनुष्टुप् छंदः ॥ दत्तात्रेयो देवता, दत्तात्रेयेति ह्रदये ॥ हरे कृष्णेति शिरसि ॥ उन्मत्तानंददायकेति शिखायाम् ॥ दिगंबरेति बाव्होः ॥ मुने बालेति चक्षुषि ॥ पिशाचज्ञानसागरेत्यस्त्रम् ॥



अनुष्टुभो योयमधीते आब्रह्महननदोषाः प्रणश्यंति ॥ सर्वोपकारी मुक्तिर्भवति ॥ य एवं वेदेत्युपनिषत् ॥ सहनाववतु सहनौभुनक्तु सहवीर्यंकरवावहै ॥ तेजास्विनावधीतमस्तु माविद्विषावहै ॐ शांतिः शांतिः शांतिः ॥ ॥ १५

---

## ॥ अथ दत्तगीता प्रारभ्यते ॥

श्रीगणेशाय नमः ॥ अस्य श्रीदत्तात्रेयगीतामालामंत्रस्य ॥ गायत्र्यादीनि छंदांसि ॥ श्रीदत्तात्रेयो परमात्मा देवता॥येनेदं पूरितमिति बीजं॥ज्ञानारसं समरसमिति शक्तिः॥किमु रोदसि मानस सर्वसमामिति कीलकम्, स्वरूपनिर्वाणं नाम योहमिति यजकम् ॥ योग-मोक्षयोः स्वानिष्ठपरिपाकसिध्यर्थे श्रीदत्तात्रेय-

गीता जपे विनियोगः ॥ येनेदं पूरितं सर्वमित्यंगुष्ठाभ्यां नमः॥
हृदयाय नमः ॥ ज्ञानामृतं समरसमिति तर्जनीभ्यां नमः ॥
शिरसे स्वाहा ॥ स्वरूपनिर्वाणमिति मध्यमाभ्यां नमः॥शिखा-
यै वौषट् ॥ किमुरोदसि मानससर्वसममित्यनामिकाभ्यां नमः॥
कवचायहुम् ॥ यदिकचैकनिरंतरेति कनिष्ठिकाभ्यां नमः॥नेत्र०॥
तमीशमात्मानमुपैमि शाश्वतमिति करतळकरपृष्ठाभ्यां नमः॥
अस्त्रायफट् ॥ ॐ भूर्भुवःस्वरोमिति दिग्बंधः ॥ अथ ध्यानं ॥
नित्यं यस्यांघ्रियुग्मं हिमकरसदृशं पादुकाद्वंद्वभूषं बिभ्रद्योगीं-
द्रदोहत्सुखनिचयसुधानिर्झरं सुच्छविद्युत् ॥ द्यूते क्रीडाविला-
सादभयवरकरः प्राणमूले च दृष्टिस्तत्त्वाद्देवावधूते त्यथ सिरसि
जटासूत्रकं यो बभार ॥ १ ॥ श्रीमत्सिद्धकिरीटरत्नकिरणाच्छ-



न्नांघ्रियुग्मांतरं भक्त्यासक्तमयैकसिंधुलहरीसिक्तार्कचिंतानलम्॥
तत्त्वासिं विशिखाग्रमुष्टिवसतिं श्रीदेवदत्तं प्रभुं यातः सोहमन-
न्यभावशरणं त्वं त्राहि मां माधवम् ॥ २ ॥ दत्तात्रेयमिदं शुद्धं
ब्रह्मनिर्वाणनिष्ठितम् ॥ अवधूतमहं नौमि विज्ञानानंदविग्रहम्
॥ ३ ॥ पठिता प्रत्यहं गीता त्रिवारं येन धीमता ॥ त्रिमासै-
र्लभते सिद्धिं निष्कामं च सकामतः ॥ ४ ॥ यस्य बाधादिदं
सर्वं ज्ञानविज्ञानगोचरम् ॥ तस्मै सदैकरूपाय दत्तात्रेयाय ते
नमः ॥ ५ ॥ दत्तात्रेयम् शिवं पूर्णं भावाभावविवर्जितम् ॥
अद्वैतं परमं गुह्यं निर्विकल्पं निरंजनम् ॥ ६ ॥ कथं वदामि
निर्भावम् भेदाभेदविवर्जितम् ॥ अमोघं चामलं पूर्णं प्रसिद्धं तत्त्व-
मव्ययं ॥७॥ ईश्वरानुग्रहादेव पुंसामद्वैतवासना ॥ महाभयपरि-

त्राणं द्वित्राणमिहजायते ॥ ८ ॥ यदेकं निर्गुणं नित्यं निराभासं निरंजनम् ॥ चिदानंदस्वरूपं च दत्तात्रेयं चिदक्रियम् ॥ ९ ॥ गोरक्षक उवाच–त्रिगुणं शरीरं भवतीह सारं अजनं समूहे चरतीह नग्नम् ॥ मुनिवरनमितं भवगुणरहितं परमविबुधं भोऽसावलं हि ॥ १० ॥ भावाभावं भवति स भावो भावं शयति मननं हि तत् ॥ प्रलयति तन्मननयनवशात्स्मृतवचनं शृणु भो अवधूता ॥ ११ ॥ श्रीदत्तात्रेय उवाच–येनेदं पूरितं सर्वम् आत्मन्येवात्मनात्मनि ॥ निराकारं कथं वंदे ह्यभिन्नं शिवमव्ययम् ॥१२॥ पंचभूतात्मकं विश्वं मरीचिजलसन्निभम् ॥ कस्यास्ति ह नमस्कारो अहमेको निरंतरम् ॥ १३ ॥ वेदांतसारसर्वज्ञं ज्ञानविज्ञानमेव च ॥ अहं चात्मा निराकारः स्वस्वं वेद्मि



स्वभावजम् ॥ १४ ॥ आत्मैव केवलं सर्वं भेदाभेदो नविद्यते ॥ अस्ति नास्ति कथं ब्रूयाद्विस्मयः प्रतिभाति मे ॥ १५ ॥ एवं सर्वात्मकं नित्यं निष्कंपं गगनोपमम् ॥ स्वभावं निर्मलं शुद्धं स एवाहं नसंशयः ॥ १६ ॥ अहमेवाव्ययोऽनंतः शुध्धविज्ञानविग्रहः ॥ सुखं दुःखं वि (न) जानामि कथं कस्यापि वर्तते ॥ ॥ १७ ॥ न मानसं कर्म शुभाशुभं मे न वाचिकं कर्म शुभाशुभं मे ॥ न कामजं कर्म शुभाशुभं मे ज्ञानामृतं शुध्धमतींद्रियोहम् ॥ १८ ॥ मनो वै गगनाकारं मनो वै सर्वतोमुखम् ॥ मनो वै परमात्मैव न मनः परमार्थतः ॥ १९ ॥ लीयंते वा नलिप्यंते कथं कस्यापि वर्तते ॥ नाहि सर्वमसर्वं च आत्मैव केवलं यतः ॥ २० ॥ मनः सर्वे प्रलीयंते मनस्तत्र प्रलीयते ॥

एवं सर्वं मनः सर्वं आत्मैव केवलं यतः ॥ २१ ॥ अहमकमिदं सर्वं व्योमाकारं निरंतरम् ॥ पश्यामि कथमात्मानं प्रत्यक्षं च तिरोहितम् ॥ २२ ॥ त्वमेव तत्त्वान्हि कथं विबुध्यसे सर्वं हि सर्वेषु विनष्टमव्ययम् ॥ सदोदसि त्वं त्वमखंडितं विभो दिवा च नक्तं च कथं हि मन्यते ॥ २३ ॥ आत्मानं सततं विध्दि सर्वमेकं निरंतरम् ॥ अहं ध्यात्वा परं ध्येयमखंडं खंडसे कथम् ॥ २४ ॥ नजातोसि मृतोसि त्वं न ते देहः कदाचन ॥ सर्वं ब्रह्मेति विख्यातं ब्रवीति बहुधाश्रितः ॥ २५ ॥ सबाह्या-भ्यंतरेऽसि त्वं शिवः सर्वत्र सर्वदा ॥ इतस्ततः कथं भ्रांतः प्रधावसि पिशाचवत् ॥ २६ ॥ संयोगाश्च वियोगाश्च वर्तंते नहि तन्न मे ॥ नाहं नत्वं जगन्नेति सर्वमात्मैव केवलम् ॥ २७ ॥

शब्दादिपंचकस्यास्य नैवासि त्वं हते पुनः ॥ त्वमेव परमं तत्त्वं मनः किं परितप्यसे ॥ २८ ॥ नच मृत्युर्न ते चित्तं बंधं मोक्षं शुभाशुभम् ॥ कथं रोदिसि रे चित्त नाम-रूपे न ते न मे ॥ २९ ॥ अहो चित्तक विभ्रांतः प्रधावसि पिशाचवत् ॥ अभिन्नं यस्य चात्मानं रागत्यागात्सुखी भव ॥ ३० ॥ त्वमेव मोक्षो हि विकारवर्जितो निष्कंपमेकं हि विमोक्षविग्रहः ॥ नवीतरागो गतवीतरागो कथं हि संतप्तअकामकामी ॥ ३१ ॥ नाहं कर्ता न भोक्ता च न मे कर्म कदाचन ॥ विशुद्धं निर्गुणं ब्रह्म बद्ध-मुक्तिः कथं मम ॥ ३२ ॥ बध्नंति श्रुतयः सर्वाः निर्गुणं शुद्ध-मव्ययम् ॥ अशरीरं समं तत्त्वं तन्मां सिद्धिर्नसंशयः ॥ ३३ ॥ साकारममृतं विद्धि निराकारं निरंतरम् ॥ एतत्तत्त्वोपदेशेन

नपुनर्गर्भसंभवः ॥ ३४ ॥ एकानेकसमं तत्त्वं वदंति ह विपश्चितः ॥ रागत्यागेन मनसि ह्येकानेको नाविद्यते ॥ ३५ ॥ अनित्यरूपस्य कुतो हि बंधनं नित्यस्य रूपस्य कुतो हि बंधनम् ॥ नानित्यरूपं न च नित्यरूपं शिवस्वरूपं सहजामलं च ॥ ३६ ॥ अनाहरूपं हि कथं समाधि-मोक्षस्वरूपं यदि सर्वमेकम् ॥ आत्मस्वरूपं हि कथं समाधिरस्तीति नास्तीति कथं समाधिः ॥३७॥ विशुद्धोसि समं तत्त्वं विदेहिस्त्वमजोऽव्ययः ॥ जानामि हि नजानामि चात्मानं मन्यसे कथम् ॥३८॥ यस्त्वं जानासि तत्त्वेन यस्त्वं पश्यसि तत्कथम् ॥ यस्त्वं मन्यसि तत्त्वेन सर्वंब्रह्मेति सर्वदा ॥ ३९ ॥ तत्त्वमस्यादिवाक्येन आत्मा हि प्रतिपादितः ॥ नेति नेति श्रुतिर्ब्रूयान्नानृत्यं (तं) पांचभौतिकम् ॥



॥ ४० ॥ आत्मनैवात्मना सर्वं त्वया पूर्णं निरंतरम् ॥ ध्याता ध्यानं नते चित्तं निर्लक्ष्यं ध्यायसे कथम् ॥ ४१ ॥ शिवं नजानामि कथं वदामि शिवं च जानामि कथं वदामि ॥ सर्वं शिवं वै परमार्थतत्त्वं स्वच्छस्वभावाद्गगनोपमोऽहम् ॥ ४२ ॥ आत्मस्वरूपी न च चोपकल्पना आत्मस्वभावेन मदन्यभावना ॥ स्वयं शिवत्वं परमं विशुद्धं नाहं न मे चैव परात्परं च ॥४३॥ न त्वं नाहं समं तत्त्वं कलानां हेतुवर्जितम् ॥ ग्राह्य-ग्राहकनिर्मुक्तं स्वयं वेद्यं कथं भवेत् ॥ ४४ ॥ अतत्त्वरूपं नहि वस्तु किंचित्तत्त्वं स्वरूपं न हि वस्तु किंचित् ॥ आत्मैकरूपं परमार्थतत्त्वं नहिंसको वाऽपि न चापि हिंसा ॥ ४५ ॥ विशुद्धोहं समं तत्त्वं विदेहं विश्वतोमुखम् ॥ विभ्रमे कथमात्मानं विभ्रां-

तोहं कथं पुनः ॥ ४६ ॥ घटे भिन्ने घटाकाशं सुलीनं भेदवर्जि-
तम् ॥ शिवेन मनसा तद्वन्नभिन्नं प्रति मे शिवम् ॥ ४७ ॥
न घटेन घटाकाशः न जीवो जीवविग्रहः ॥ केवलं ब्रह्म
संवेत्ति वेद्य-वेदविवर्जितम् ॥ ४८ ॥ सर्वत्र सर्वदा वर्जं सर्व-
मात्मानजं ध्रुवम् सर्वशून्यमशून्यं च तन्मां विद्धि नसंशयः ॥
॥ ४९ ॥ न देवलोकास्त्वसुरा न यक्षा वर्णाश्रमो नैव कुलं
नजातिः ॥ न धूममार्गो न च दीप्तिमार्गो ब्रह्मैकरूपं परमार्थ-
तत्त्वम् ॥५०॥ व्याप्य-व्यापकनिर्मुक्तं तत्त्वमेकं च केवलम् ॥
प्रत्यक्षं वा परोक्षं वा चात्मानं मन्यसे कथम् ॥ ५१ ॥ अद्वैतं
केचिदिच्छंति द्वैतमिच्छंति चापरे ॥ समं तत्त्वं नविंदंति द्वैता-
द्वैतविवर्जितम् ॥ ५२ ॥ श्वेतादिवर्णरहितं शब्दादिगुणवर्जि-



तम् ॥ कथयामि कथं तत्त्वं मनो-वाचामगोचरम् ॥ ५३ ॥
यदा हि मन्यसे सर्वं देहादिगगनोपमम् ॥ तदहं ब्रह्म संविद्धि
तत्त्वं वेत्ति परात्परम् ॥ ५४ ॥ परेण सर्वमात्मानं न भिन्नं
प्रतिभाति मे ॥ ब्रह्मैव केवलं सर्वं ध्याता ध्यानं च कथ्यते ॥
॥ ५५ ॥ यत्करोषि यदश्नासि यच्छृणोषि ददासि यत् ॥
एतत्सर्वं न ते किंचिच्छुद्धोहमजमव्ययम् ॥ ५६ ॥ सर्वं जग-
द्विद्धि निराकृतिं तं सर्वं जगद्विद्धि विकारहीनम् ॥ सर्वं जग-
द्विद्धि विशुद्धदेहं सर्वं जगद्विद्धि शिवैकरूपम् ॥ ५७ ॥ तत्त्वं
तत्त्वसमं देहं किं तु जानामि वा पुनः ॥ असंवेद्यं स्वसंवेद्य-
मात्मानं मन्यसे कथम् ॥५८॥ अष्टांगयोगेन तु नैव बुद्धं गुरू-
पदेशेन तु नैव बुध्यम् ॥ मनोविलासेन तु नैव बोध्दुं स्वयं

स्वबोधेन विशुद्धरूपम् ॥ ५९ ॥ नहि भूतात्मको देहो विदेहो वर्तते नहि ॥ आत्मैव केवलं सर्वं न तु कुर्यात्कथंचन ॥ ६० ॥ माया माया कथं तात छाया छाया नविद्यते ॥ तत्त्वमेकमिदं सर्वं व्योमाकारं निरंजनम् ॥ ६१ ॥ आदिमध्यांतमुक्तोहं नबद्धोहं कदाचन ॥ स्वभावनिर्मलं शुद्धमिति मे निश्चयो मनः ॥ ॥ ६२ ॥ महदादिजगत्सर्वं नकिंचित्प्रतिभाति मे ॥ ब्रह्मैव केवलं सर्वं कथं वर्णाश्रमो भवेत् ॥ ६३ ॥ जानामि सर्वथा सर्वमहमेको निरंतरम् ॥ निरालंबमशून्यं च न तु व्योमादिपंचकम् ॥६४॥ नपुमान्नपुंसको न स्त्री न बद्धो नैव कल्पना ॥ स्वानंदंच निरानंदमात्मानं मन्यसे कथम् ॥ ६५ ॥ नबद्धो नैव मुक्तोहं नचाहं ब्रह्मणः पृथक् ॥ नभर्ता न च भोक्ता च व्याप्यव्यापकवर्जितम् ॥ ६६ ॥ यथा जले जलं न्यस्तं स्वस्मिन् संभेदवर्जितम् ॥ प्रकृतिं पुरुषं तद्वन्नभिन्नं प्रतिभाति मे ॥६७॥ जानासि ते परं रूपं प्रत्यक्षं गगनोपमम् ॥ नचापरं हि रूपं हि मरीचिजलसन्निभम् ॥ ६८ ॥ नगुरुर्नोपदेशश्च नचोपाधिर्नच क्रिया ॥ विदेहीं मां विजानीहि विशुद्धोहं स्वभावतः ॥ ॥ ६९ ॥ यदि यो वै नमुक्तोहं नबद्धोहं कदाचन ॥ साकारं वा निराकारमात्मानं मन्यसे कथम् ॥ ७० ॥ विशुद्ध ईश्वरोसि त्वं न ते चित्तं परात्परम् ॥ अहमात्मा परं तत्त्वमिदं वक्तुं न शक्यते ॥ ७१ ॥ कथं रोदिसि रे चित्त आत्मन्येवात्मना भव ॥ पिबन् सकलतीर्थात्मा अद्वैतं परमामृतम् ॥ ७२ ॥ नवै बोधो नचाबोधो नबोधो बोध एव च ॥ यस्य निर्वासनाबोधो स बोधो

नान्यथा भवत् ॥ ७३ ॥ न ध्यान-तर्कौ न समाधियोगो न देशकालौ न गुरूपदेशः ॥ स्वभावसंवित्तिपरं च तत्त्वमाकाशकल्पं सहजं ध्रुवं च ॥ ७४ ॥ नजातोसि मृतोसि त्वं न ते कर्म शुभाशुभम् ॥ शुद्धोहं निर्गुणं नित्यं बंधमु-क्तिः कथं मम ॥ ॥ ७५ ॥ यदि सर्वगतो देवः स्थिरः पूर्णो निरंतरम् ॥ अंतरं नैव पश्यामि सबाह्याभ्यंतरं कथम् ॥ ७६ ॥ स्फुरत्वेवं जगत्सर्वमखंडितनिरंतरम् ॥ अंतरं नैव पश्यामि सबाह्याभ्यंतरं कथम् ॥ ७७ ॥ अहो मायामये देहे द्वैताद्वैतविकल्पना ॥ निराकारोपि साकारो नेति नेतीति सर्वथा ॥ ७८ ॥ भेदाभेद-विनिर्मुक्तं वर्तते केवलं शिवम् ॥ न ते च माता भगिनी पिता च न ते च पत्नी न सुहृन्नपुत्रः ॥ ७९ ॥ नपक्षपाती



न च पक्षपाती किं तप्यसे तत्परकामकामी ॥ दिवानक्तं न ते चित्ते उदयास्तमयं न ते ॥ ८० ॥ चिद्देहमशरीरत्वात्कल्पयंति कथं बुधाः॥ नहि भुक्तं विभक्तं च न हि दुःख-सुखानि च ॥ ८१ ॥ न हि सर्वमसर्वं च विद्धि चात्मानमव्ययम् ॥ नाहं कर्ता च भोक्ता च न मे कर्म पुराऽधुना ॥ न मे देहो विदेहो वा निर्ममेति ममेति किम् ॥ ८२ ॥ न मे रागादिको दोषो दुःखं चैवादिकं नहि ॥ आत्मनं विद्धि मामेवं विशालं गगनो-पमम् ॥ ८३ ॥ सखे मनः किं बहुजल्पितेन सखे पुनः सर्वमिदं वितथ्यम् ॥ संसारभूतं मम नैव सर्वं भवेत्स्वरूपं गगनोपमं च ॥ ८४ ॥ येनकेन च भावेन यत्र यत्र मृतः पुनः ॥ योगिन-स्तत्र लीयंते घटाकाशमिवांबरे ॥ ८५ ॥ तीर्थेवापि त्यजेद्देहं

नष्टस्मृतिः परित्यजेत् ॥ ज्ञाने समयकल्पे च कैवल्याविहिता-सुता ॥ ८६ ॥ तस्य ज्ञानं नचैवास्ति यस्य स्वर्गादिकल्प्यते ॥ यत्पदं प्रापितं देवैः स योगी नात्र संशयः ॥ ८७ ॥ धर्मार्थ-काम-मोक्षादिविपदादिचराचरम् ॥ मन्यंते योगिनः सर्वे मरीचिजलसन्निभम् ॥ ८८ ॥ अतीतानागतं कर्म वर्तमानं तथैव च ॥ नकरोमि नभुंजामि इति मे निश्चला मतिः ॥ ८९ ॥ कदापि चित्तदोषेण कल्पितं स्वर्गमंडलम् ॥ तेन स्वर्गपदं भोक्ता आत्मज्ञानपरायणम् ॥९०॥ गोरक्षक उवाच—शून्यागारे समरसयुक्तो नित्यं तिष्ठति सुखमवधूतः ॥ विचरति नग्न-स्त्यक्त्वा गर्वं विंदति केवलमात्मनि सर्वम् ॥ ९१ ॥ तृतीयं तुर्यं नहि नहि यत्र विंदति केवलमात्मनि तत्र ॥ धर्माधर्मौ



नहि नहि यत्र बंध-विमुक्तौ कथमिह तत्र ॥ ९२ ॥ विंदति विंदति नहि नहि यत्र छंदोलक्षणं नहि नहि तत्र ॥ समरस-मग्नो भावितपूतः प्रभवति तत्त्वं परमवधूतः ॥ ९३ ॥ सर्वशून्य-मशून्यं च सत्यासत्यं नविद्यते ॥ स्वभावभावितं ब्रूयाच्छात्रेष्वे-वेतिपूर्वकम् ॥ ९४ ॥ ॥ ॐ तत्सदिति दत्तात्रेयगीतासूपनि-षत्सारमथितार्थेषु निरंजनविद्यायां निर्वाणयोगे श्रीदत्त-गोरक्ष-कसंवादे सावित्र्युपदेशे द्वैताद्वैतनिरूपणं नाम प्रथमोध्यायः ॥

---

श्रीगणेशाय नमः ॥ सगुणगुणविभागं वर्तते नैव किंचित्समर-समविभागं सर्वथा नैव किंचित् ॥ इति विरतिविहीनं निर्मलं निष्प्रपंचं कथमिह खलु वंदे व्योमरूपं शिवं वै ॥ १ ॥ श्वेता-

दिवर्णरहितास्तव यं शिवश्च कार्यं च कारणमिदं हि वयं शिवश्च॥ एवं विकल्परहितास्तव यं च ह्यात्मा आत्मानमात्मनि च मित्र कथं वदामि ॥ २ ॥ निर्मूल मूलरहितो हि सदोदितोहं निर्धूम-धूमरहितो हि सदोदितोऽहं ॥ संदीप्त्यदीप्तिरहितो हि सदोदि-तोऽहं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३ ॥ निष्कारकाम-मिह नाम कथं वदामि निःसंगसंगमिह नाम कथं वदामि ॥ अव्यक्तव्यक्तमिह नाम कथं वदामि ज्ञानामृतं समरसं गगनो-पमोहम् ॥ ४ ॥ अद्वैतरूपमखिलं हि कथं वदामि द्वैतस्वरूप-मखिलं हि कथं वदामि ॥ अनित्य-नित्यमखिलं हि कथं वदामि ज्ञानामृतं समरसं गगनोपमोहम् ॥ ५ ॥ स्थूलं हि नो न च कृशं नगतागतं हि चाद्यं च मध्यरहितो नपरापरं हि ॥ सत्यं



वदामि खलु वै परमार्थतत्त्वं ज्ञाना० ॥ ६ ॥ संविद्धि सर्वकर-णानि नभो नभांसि संविद्धि सर्वविषयश्च नभोनभश्च ॥ संविद्धि चैकममलं नहि बन्धमुक्तिः ज्ञानामृ० ॥ ७ ॥ दुर्बोध-बोधगहनो नभवामि तात दुर्लक्ष्यलक्ष्यगहनो नभवामि तात ॥ आसन्नदुर्गगहनो नभवामि तात ज्ञाना० ॥८॥ निष्कर्मकर्मग-हनोज्वलनो भवामि निर्दुःखदुःखदहनोज्वलनो भवामि॥ निर्दे-हदेहदहनोज्वलनो भवामि ज्ञाना० ॥९॥ निष्पापपापदहने हि हुताशनोहं निर्धर्मधर्मदहने हि हुताशनोहम् ॥ निर्बंधबंधदहने हि हुताशनोहं ज्ञा० ॥१०॥ निःशून्यशून्यगगने हि हुताशनोहं आत्मस्वरूपगगने हि हुताशनोहम् ॥ एवं हुताशनगुणस्य हुताशनोहं ज्ञाना० ॥ ११ ॥ निर्भावभावरहितो नभवामि वत्स

निश्चित्तचित्तरहितो नभवामि वत्स ॥ निर्योगयोगरहितो नभ-
वामि वत्स ज्ञाना० ॥१२॥ निर्मोहमोहपदवीति न मे विकल्पो
निःशोकशोकपदवीति न मे विकल्पः ॥ निर्लोभलोभपदवीति
न मे विकल्पो ज्ञानामृ० ॥ १३ ॥ संसारसंततिलता न च मे
कदाचित्तापस्य शांतिमसुखं न च मे कदाचित् ॥ अज्ञानबंधन-
मिदं न च मे कदाचिज्ज्ञानामृतं० ॥ १४ ॥ संसारसंसृतिरजो
न च मे विकारः संसारसंततितमो न च मे विकारः ॥ सत्त्वं
स्वधर्मजनकं न च मे विकारो ज्ञानामृतं स०॥१५॥ संसारदुःख-
जनकं न च मे कदाचित्संतापमोहजनिता नच मे कदाचित् ॥
यस्मादहंकृतिपरं नच मे कदाचिज्ज्ञानामृतं स० ॥१६॥ निष्कं-
पकंपनिधनं सविकल्पकल्पं स्वप्नप्रबोधानिधनं नदिवं न नक्तम्॥



निःसारसारनिधनं नचराचरं हि ज्ञानामृतं समर० ॥ १७ ॥
नो वेद्यवेदकमिदं नच हेतुकर्ता वाचामगोचरमिदं न मनो न
बुद्धिः॥एवं कथं हि भवतां कथयामि तत्त्वम् ज्ञानामृतं० ॥१८॥
निर्भिन्नभिन्नरहितं परमैकतत्त्वं अंतादिमध्यरहितं परमैकतत्त्वम्॥
एवं कथं हि उचितं परमार्थतत्त्वं ज्ञानामृतं स० ॥ १९ ॥ यद्वा
समग्रसहजं स्वयमेव सर्वमंतर्बहिः किल कथं परमार्थतत्त्वम् ॥
यस्मादहो परतरं न हि वस्तु किंचिज्ज्ञानामृ० ॥२०॥ रागादि-
दोषरहितं त्वहमेत्र तत्त्वं संसारशोकरहितं त्वहमेव तत्त्वम् ॥
देहादिदुःखरहितं त्वहमेव तत्त्वं ज्ञानामृतं० ॥ २१ ॥ स्थान-
त्रयं यदि च नेति कथं तुरीयं कालत्रयादि न च नेति कथं
दिशश्च ॥ शांतं परं यदि ध्रुवं परमार्थतत्त्वं ज्ञानामृतं० ॥२२॥

दिर्घो लघुः पुनरतीह मनोविभागः कोणं च वर्तुळमितीह मनोविभागम् ॥ विस्तारसंघटमितीह मनोविभागो ज्ञानामृतं० ॥ २३ ॥ माता पिता च तनयादि न मे कदाचिद्भ्रमं च मृत्यु-मनसो न च मे कदाचित् ॥ निर्व्याकुलस्थिरपरं परमार्थतत्त्वं ज्ञानामृतं ॥ २४ ॥ निःशुद्धसर्वमविचारमनंतरूपं निर्लेपलेपनविचारमतर्करूपम् ॥ निर्नादनादमविचारमगाधरूपं ज्ञानामृतं० ॥ २५ ॥ उच्चारमात्रमपि ते नहि नाममात्रं निर्भिन्नभिन्नमभि ते नाहि रूपमात्रम् ॥ निर्लज्ज मानस करोषि कथं विलापं ज्ञानामृतं० ॥ २६ ॥ ब्रह्मादयः सुरगणाः कथमत्र संति स्वर्गादयो वसतयः कथमत्र संति ॥ यद्येकरूपममलं परमार्थतत्त्वं ज्ञानामृतं स० ॥ २७ ॥ निष्कर्मकर्मसततं तु कथं



करोमि निःसंगसंगरहितं परमं विनोदम् ॥ निःसत्यसत्यरहितं सततं बलोहं ज्ञानामृतं समरसं गगनोपमोहम् ॥२८॥ मायाप्रपंचरचना न च मे विकाराः कौटिल्य-दंभवचना न च मे विकारः ॥ सत्याद्यसत्यरचना न च मे विकारो ज्ञानामृतं समरसं० ॥२९॥ वीतर्क-तर्कमिह तात न मे वीभाति वीतर्क-तर्क्यमिह तात न मे विभाति ॥ शून्यस्य शून्यमिह तात न मे विभाति ज्ञानामृतं स० ॥ ३० ॥ आलंबहीनमखिलं च निरामयं च विज्ञानरूपमखिलं दमनादिहीनम् ॥ संसिद्धि-शांतिमचलं ननु पूर्ण-पूर्णं ज्ञानामृतं० ॥ ३१ ॥ सत्यं वदामि विरजावचनैकजातं सत्यं वदामि सरजावचनैकजातम् ॥ सत्यं कथं हि सततं च सितासितौ नो ज्ञाना० ॥ ३२ ॥ संध्यादिकाल-

रहितं नवियोगयोगं ज्ञानं प्रबोधरहितं नबधीर-मूकम् ॥ एवं विकल्परहितं निजभावशुद्धं ज्ञानामृतं० ॥ ३३ ॥ धर्मादिकं तव पदं हि कथं वदामि संवित्यसंशयपदं हि कथं वदामि ॥ एवं निरंजनसमं हि निरंतरं हि ज्ञानामृतं० ॥ ३४ ॥ निर्नाथनाथविगतं हि निराकुलं वै निश्चित्तचित्तविगतं हि निराकुलं वै ॥ निर्भावभावरहितं हि निराकुलं वै ज्ञानामृतं० ॥ ३५ ॥ किं काननं ग्रहमिदं हि कथं वदंति संविद्धि संशयममू हि कथं वदंति ॥ एवं निरंतरसमं हि निरंजनं वै ज्ञानामृतं० ॥ ३६ ॥ निर्जीव-जीवरहितं सततं विभाति सज्जीव-जीवरहितं सततं विभाति ॥ निर्बीज-बीजरहितं सततं विभाति ज्ञानामृ० ॥३७॥ संभूतिवर्जितमिदं सततं विभाति संसारवर्जितमिदं सततं



विभाति ॥ संसारवर्जितमिदं सततं विभाति ज्ञानामृतं० ॥३८॥ किन्नामरोदासि सखे नशुभाशुभानि किन्नाम रोदासि सखे न च जन्म-मृत्युः ॥ किन्नाम रोदसि सखे न च ते विशोको ज्ञानामृतं स० ॥ ३९ ॥ किन्नाम रोदसि सखे न च ते नयांसि किन्नाम रोदसि सखे न च तेंद्रियाणि ॥ किन्नाम रोदसि सखे न च ते मनस्त्वं ज्ञानामृतं ॥ ४० ॥ किन्नाम रोदसि सखे न च तेऽस्ति कामः किन्नाम रोदसि सखे न च ते प्रकोपः ॥ किन्नाम रोदसि सखे न च तेऽस्ति मोहो ज्ञानामृतं० ॥ ४१ ॥ ऐश्वर्यमिच्छसि कथं न च ते धनानि ऐश्वर्यमिच्छसि कथं न च ते प्रयत्नः ॥ ऐश्वर्यमिच्छसि कथं न च ते ममेति ज्ञानामृतं० ॥ ४२ ॥ देहत्रयं न तु च मित्र

न ते न मे च निर्भेदभेदमिह मित्र न ते न मे च ॥ निर्मज्य मानस विनश्य कथं विभिन्नः ज्ञानामृतं० ॥ ४३ ॥ नोचाणुमात्रमपि ते हि विरागरूपं नोचाणुमात्रमपि ते हि सरागरूपम् ॥ नोचाणुमात्रमपि ते हि विरागरूपं ज्ञानामृतं० ॥ ४४ ॥ ध्याता न तेषु त्हृदये च न ते समाधिर्ध्येयं न तेषु त्हृदये च न ते हि देशः ॥ ध्यानं न तेषु त्हृदये च न तेऽस्ति लोको ज्ञानामृतं० ॥ ॥ ४५ ॥ कांतारध्वांतवदिमं हि कथं वंदति संचिंत्य संशयमिदं हि कथं वदंति ॥ एकं निरंतरसमं हि निरंजनं हि ज्ञानामृतं० ॥ ४६ ॥ यत्सारभूतममलं कथितं मया ते तत्त्वं हि नाहमिह भावगुरुर्नशिष्यः ॥ स्वच्छः स्वरूपममलं परमार्थतत्त्वं ज्ञानामृतं० ॥ ४७ ॥ कथमिह परमार्थतत्त्वमानंदरूपं कथमिह



परमार्थतत्त्वमक्षस्वरूपम्॥कथमिह परमार्थतत्त्वविज्ञानरूपं ज्ञानामृतं० ॥ ४८ ॥ दहनपवनहीनं विद्धि विज्ञानमेकं धरणिजलविहीनम् ज्ञानविज्ञानमेकम् ॥ सकलगगनहीनं विद्धि विज्ञानमेकं ज्ञानामृतं० ॥ ४९ ॥ निश्चितरूपं नविशून्यरूपं नशुद्धरूपं नविशुध्दरूपम् ॥ रूपं विरूपं नभवामि किंचित्स्वच्छैकरूपं परमार्थतत्त्वम् ॥ ५० ॥ मुंच मुंचनिसन्नानि त्यागं मुंच शिवं वद ॥ त्यागात्यागविषं मुंच अमृतत्त्वं विषायते ॥ ५१ ॥ दृश्यादृश्यपरं दृश्यमृतामृतपरं श्रृणु ॥ शब्दाशब्दपरं वेद वेदावेदपरं सदा ॥ ५२ ॥ विंदति विंदति नहि नहि यत्र छंदोलक्षणं नहि नहि तत्र ॥ समरसमग्नो भावितपुंसः प्रभवाति तत्त्वं परमवधूतः ॥५३॥ ॥ ॐतत्सदिति श्रीमद्दत्तात्रेयगीतासू-

पनिषत्सारमथितार्थेषु निरंजनविद्यायां दत्त-गोरक्षकसंवादे द्वैता-द्वैतनिरूपणंनाम द्वितीयोध्यायः ॥२॥ श्रीदत्तात्रेयार्पणमस्तु ॥



---

श्रीगणेशाय नमः ॥ श्रीदत्त उवाच—आवाहनं नैव विसर्जनं च पुष्पाणि पत्राणि कथं भवंति ॥ ज्ञानानि दानानि कथं भवंति समासमं चैव शिवार्चनं च ॥ १ ॥ नकेवलं बंध-विबंध-मुक्तो नकेवलं शुद्ध-विशुत्ध-मुक्तः ॥ नकेवलं योग-वियोग-मुक्तो सर्वै-र्विमुक्तो गगनोपमोहम् ॥ २ ॥ संजायते सर्वमिदं वितथ्यं नजायते सर्वमिदं वितथ्यम् ॥ एवं विकल्पो मम नैव जातः संवित्धि निर्वाणमनोमयोहम् ॥ ३ ॥ नचाननं वापि निरंजनं वा नचांतरं वापि निरंजनं वा ॥ अंतर्बहिर्भिन्नमिदं वितथ्यं



स्वरूपनिर्वाणमनोमयोहम् ॥ ४ ॥ अबोधरूपं मम नैव जातं बोधस्वरूपं मम नैव जातम् ॥ अबोध-बोधं च कथं वदामि स्वरूपनिर्वाणमनोमयोहम् ॥ ५ ॥ नधर्मयुक्तो नच पापयुक्तो नबत्धमुक्तो न च मोक्षयुक्तः ॥ युक्तं त्वयुक्तं न च मे विभाति स्वरूपनिर्वाण० ॥ ६ ॥ परस्परं वा न च मे कदाचित् मध्य-स्थभावो हि न चारिमित्रः ॥ हिताहितं चापि कथं वदामि स्वरूपनिर्वाण० ॥७॥ नोपासको नैवमुपास्यरूपं नचोपदेशो न च मे क्रिया च ॥ सिद्धिप्रासिद्धिं च कथं वदामि स्वरूपनि० ॥ ८ ॥ नव्यापकं व्याप्यमिहास्ति किंचिन्नवाऽलयं वापि निरालयं वा ॥ अशून्यशून्यं च कथं वदामि स्वरूप० ॥ ९ ॥ नग्राह्यकं ग्राहकमेव किंचिन्नकारणं वा मम नैव कार्यम् ॥

अचिंत्य-चिंत्यं च कथं वदामि स्वरू० ॥ १० ॥ नकेवलं वा मम नैव भेद्यं न केवलं वा मम नैव भेदः ॥ अनागतं मित्र कथं वदामि स्वरूप० ॥ ११ ॥ नचास्ति देहो न च मे विदेहो नबुद्धिर्मनो मे न हि चेंद्रियाणि ॥ रागो विरागश्च कथं वदामि स्वरूप० ॥ १२ ॥ उल्लेखमात्रं न हि नम्रमुच्चैरुल्लेखमात्रं न तिरोहितं च ॥ समासमं मित्र कथं वदामि स्वरूप० ॥ १३ ॥ जितेंद्रियोहं त्वजितेंद्रियो वा नसंयमो मे नियमो हि जातः ॥ जयोऽजयो वाऽपि कथं वदामि स्वरूप० ॥ १४ ॥ अमूर्ति-मूर्तिर्न च मे कदाचिदाद्यंत-मध्यो न च मे कदाचित् ॥ चलाचलं चित्त कथं वदामि स्वरूप० ॥ १५ ॥ मृतामृतं चापि न मे विषं च संजायते तात न मे कदाचित् ॥ अशुद्ध-



शुद्धं च कथं वदामि स्वरूप० ॥ १६ ॥ स्वप्न-प्रबोधो न च योगमुद्रा नक्तं दिवा वापि न मे कदाचित् ॥ अतूर्य-तूर्यं च कथं वदामि स्वरूपनि० ॥ १७ ॥ संविद्धि मां सर्वविसर्ग-मुक्तं ध्यानादिकं कर्म कथं करोमि ॥ माया-विमाया च कथं वदामि स्वरूप० ॥ १८ ॥ संविद्धि मां ध्यानसमाधियुक्तं संविद्धि मां लक्ष-सलक्षयुक्तम् ॥ योगं-वियोगं च कथं वदामि स्वरूप० ॥ १९ ॥ मूर्खोपि नाहं न च पंडितोहं समौ न वार्ता न च मे कदाचित् ॥ स्नेहं विमोहं च कथं वदामि स्वरूपनि० ॥ २० ॥ पिता न माता न कुलं न जातिः संसार-भूतिर्न च मे कदाचित् ॥ स्नेहं विमोहं च कथं वदामि स्वरूप० ॥ २१ ॥ अस्तोदये नैव सदोदितोहं दिवा च नक्तं न

च मे कथंचित् ॥ तेजो-वितेजश्च कथं वदामि स्वरूप० ॥२२॥ असंशयं विद्धि निरंतरं मां असंशयं विद्धि निरंजनं माम् ॥ असंशयं विद्धि निराकुलं मां स्वरूप० ॥२३॥ धर्माणि सर्वाणि परित्यजंति शुभाशुभं कर्म परित्यजंति ॥ ज्ञानामृतं चारु पिबंति धीराः स्वरूपनि० ॥२४॥ गोरक्ष उवाच—विंदति विंदति नहि नहि यत्र छंदोलक्षणं नहि नहि तत्र ॥ समरसमग्नो भावितपूतः प्रभवति तत्त्वं परमवधूतः ॥ २५ ॥ ॥ इति श्रीदत्तात्रेयगीतासूपनिषत्सारमथितार्थेषु निरंजनविद्यायां श्रीदत्त-गोरक्षकसंवादे निर्वाणयोगो नाम तृतीयोध्यायः ॥ ३ ॥ ॥



---

श्रीगणेशाय नमः ॥ ॐकार इति खलु गगनसमो नपरापरसारविसार इति ॥ अविशाल-विशालनिराकरणम् कथमक्षरबिंदु-समुच्चरणम् ॥ १ ॥ इह 'तत्त्वमसि' प्रभृतिभिः श्रुतिभिः प्रतिपादितमात्मनि तत्त्वमसि ॥ त्वमुपाधिविवर्जितसर्वसमं किमु रोदसि मानस सर्वसमम् ॥ २ ॥ अधऊर्ध्वविवर्जितसर्वसमं ककुभादिविवर्जितसर्वसमम् ॥ यदि चैकनिरंतरसर्वसमं किमु रोदसि मानस सर्व० ॥३॥ नहि कल्पितभाव-विभाव-रतिर्नहि राग-विराग-विचार-रतिः ॥ यदिसर्वविवर्जित सर्वसमं किमु रोदसि मानस सर्वसमम् ॥ ४ ॥ नहिबोध-विबोधि-समाधिरिति नहि काल-विकालसमाधिरिति ॥ नहि देश-विदेशसमाधिरिति किमु रोदसि० ॥ ५ ॥ नहि कुंभनभो नहिकुंभमिति नहि जीव

वपुर्नाहि जीव इति ॥ नहिकारणकार्यविचार इति किमु० ॥६॥ यदिसर्वनिरंतरमोक्षपदं लघुदीर्घविचारविहीन इति ॥ नाहि वर्तुळ-कोणविचारगतिः किमु० ॥७॥ इह शून्य-विशून्यविहीन इति इह शुद्ध-विशुद्धविहीन इति ॥ इह सर्व-विसर्व विहीन इति कि० ॥ ८ ॥ नहि भीतिविचित्रविचार इति न निरंतरसंधिमनस्यमिति ॥ अरिमित्रविवर्जितसर्वसमं किमु रो० ॥ ९ ॥ नहि शेष-विशेषणरूप इति न चराचरभेदविभेद इति ॥ इह मोक्षनिरंतरसर्वमिति किमु० ॥ १० ॥ न गुणागुणपाशविबंध इति द्रुतजीवनजीवकरोमि कथम् ॥ इह शुद्ध-निरंजनसर्वसमं किमु रो० ॥ ११ ॥ इह भाव-विभावविहीनपरं इह काम-विकामविहीनपरम् ॥ इह बोधतमं खलु मोक्षसमं किमु रो० ॥१२॥



इह तत्त्वनिरंतरसर्वसमं न हि संधि-विसंधि-समागमनम् ॥ यदि सर्वविवर्जितमेव समं किमुरो० ॥ १३ ॥ इह रूप-विरूपविहीन इति ननु भिन्न-विभिन्नविहीन इति ॥ ननु सर्व-विसर्वविहीन इति किमु रोदसि० ॥ १४ ॥ अनिकेतकुटीपरिचारसमं इह संग-विसंगविहीनपरम् ॥ इह बोध-विबोधविहीन इति किमु रो० ॥ १५ ॥ अविकार-विकारमसत्यमिति अविलक्ष-विलक्षमसत्यमिति ॥ इह केवलमात्मनि सत्यमिति किमु रो० ॥१६॥ इह सर्वगतः खलु जीव इति इह सर्वनिरंतरजीव इति ॥ इह केवलमात्मनि जीव इति किमु रो० ॥ १७ ॥ अविवेकविवेकाविबोध इति अविकल्प-विकल्पविबोध इति ॥ यदि चैकनिरंतरबोध इति किमु रो० ॥ १८ ॥ यदि वर्णविवर्णविहीनसमं

यदि भेद-विभेदविहीनसमम् ॥ यदि कारण-कार्यविहीनसमं किमु रो० ॥ १९ ॥ इह सर्व हि केवलसर्वचिते इह केवल-निर्मलसर्वचिते ॥ वियदादिविवर्जितसर्वचिते किमु० ॥ २० ॥ इति निर्मलनिश्चलसर्वगतं इति सर्वनिरंतरसर्वगतम् ॥ दिन-रात्रिविवर्जितसर्वगतं किमु रो० ॥ २१ ॥ न च बंधसमाधि-समागमनं न हि योग-वियोगसमागमनम् ॥ न च तर्क-वितर्कसमागमनं किमु रो० ॥ २२ ॥ इह काल-विकालनिराकरणं अनुपीनकृशैकनिराकरणम् ॥ नहि केवलतत्त्वनिराकरणं किमु रो० ॥ २३ ॥ इह देह-विदेहविहीनपरम् नहिजाग्राति-भ्रांति-तृतीयपरम् ॥ अपिधान-पिधानविचारपरं किमु रो० ॥ २४ ॥ गगनोपमशुद्ध-विशुद्धसमं इह सर्वविवर्जितसर्वसमम् ॥ गत-



सार-विसारविकारसमं किमु रो० ॥ २५ ॥ इह धर्म-विधर्म-विरागपरं इह वस्तु-विवस्तुविहीनपरम् ॥ इह कामविकामवि-रागपरं किमु रोद० ॥ २६ ॥ गुण-दोषविवर्णितसर्वमसि सुख-दुःखविवर्जिततत्त्वमसि ॥ यदि रे गगनोपमतत्त्वमसि किमु रो० ॥ २७ ॥ बहुधा श्रुतयः प्रवदंति यतो वियदादिगतो यदि तोयसमम् ॥ यदिचेद्गगनोपमतत्त्वमसि किमु रो० ॥२८॥ यदि रूपविवर्जितसर्वमिदं यदि चैकनिरंतरसर्वमिदम् ॥ यदि सर्वविवर्जितसर्वमिदं किमु रो० ॥ २९ ॥ इह सारसमुच्च-यसर्वयति कथितो निजभावविबोधपति ॥ यदि यत्कारणनहि सत्यमिति किमु रो० ॥ ३० ॥ विंदति विंदति नहि नहि यत्र छंदोलक्षणं नहि नहि तत्र ॥ समरसमग्नो भावितपूतः प्रभवति

तत्त्वं परमवधूतः ॥ ३१ ॥ इति श्रीदत्तगीतासूपनिषत्सारमथितार्थेषु निरंजनविद्यायां निर्वाणयोगे श्रीदत्त-गोरक्षकसंवादे समदृद्दिदृष्टिस्वात्मसंवित्युपदेशोनाम चतुर्थोध्यायः ॥ ४ ॥

---

श्रीगणेशाय नमः ॥ बहुधा श्रुतयः कथयंति यतो वियदादिमिदं मृगतोयसमम् ॥ यदि चैकनिरंतरसर्वशिवम् ह्युपमा च कथं ह्युपमेयहीनम् ॥ १ ॥ अविभक्त-विभक्तविहीनपरं ननु कार्यविकार्यविहीनपरम् ॥ यदिचैकनिरंतरसर्वशिवं यजनं कथमध्ययनादिकम् ॥ २ ॥ मनएव निरंतरसर्वगतं मनएव निरंतरहीनपरम् ॥ मनएव निरंतरसर्वशिवं मनएव कथं हि विचारयति ॥ ३ ॥ दिनरात्रिविभेदनिराकरणं उदितानुदितस्य निराकरणम् ॥ यदिचैकनिरंतरसर्वशिवं रविचंद्रमसौ ज्वलनश्च कथम् ॥ ४ ॥ गतकाम्य-विकाम्यविभेद इति गतचेष्टित-चेष्टितभाव इति ॥ यदि चैकनिरंतरसर्वशिवं बहिरंतरसंधि-विसंधिविहीनम् ॥ ५ ॥ नहि यत्रहि सार-विसार इति इह शून्य-विशून्यविहीन इति ॥ यदिचैकनिरंतरसर्वगतं प्रथमं च कथं द्वितीयं च कथम् ॥ ६ ॥ यदिभेदक-भेद्यनिराकरणं यदि वेदक-वेद्यनिराकरणम् ॥ यदि चैकनिरंतरसर्वशिवं तृतीयचतुर्थं कथं च तुरीयम् ॥ ७ ॥ गदितागदितं नहि सत्यमिति विहिताविहितं नहि सत्यमिति ॥ यदि चैकनिरंतरसर्वशिवं विषयेंद्रियबुद्धिमनश्च कथम् ॥ ८ ॥ यदि कल्पितभेदनिराकरणं यदिकल्पितवेदनिराकरणम् ॥ यदि चैकनिरंतरसर्वशिवं श्रुतयश्च कथं हि पुराण-

तमम् ॥ ९ ॥ गगनं पवनो नहि सत्यमिति धरणी दहनो नहि सत्यमिति ॥ यदि चैकनिरंतरसर्वशिवं जलदं च कथं सलिलं च कथम् ॥ १० ॥ मरणामरणस्य निराकरणं करणाकरणस्य निराकरणम् ॥ यदि चैकनिरंतरसर्वशिवं गगनागगनं च कथं हि वद ॥ ११ ॥ प्रकृती पुरुषो नहि भेद इति नहि कारणस्य न विरक्तिरिति ॥ यदि चैकनिरंतरसर्वशिवं पुरतोपुरतस्य कथं हि वद ॥ १२ ॥ तव आश्रमवर्णविहीनपरं कारणकर्तृकाविहीनपरम् ॥ यदि चैकनिरंतरसर्वशिवं गुण-दोष-विचारवचांसि कथम् ॥ १३ ॥ ग्रसिताग्रसितं च वितथ्यमिति जनिताजनितं च वितथ्यमिति ॥ यदि चैकनिरंतरसर्वशिवं इह नेति न नेति कथं च पुनः ॥१४॥ तनुधर्म-विधर्मविहीन इति ननु कार्यविकार्य-



विनाश इति ॥ यदि चैकनिरंतरसर्वशिवं अविनोद-विनोदरतिश्च कथम् ॥ १५ ॥ पुरुषोपुरुषस्य विनाष्टिरिति वनितावनितस्य विनाष्टिरिति ॥ यदि चैकनिरंतरसर्वशिवं अविनाष्टि ननाष्टि कथं च भवेत् ॥ १६ ॥ यदि मोह-विमोहविहीनपरं यदि संशय-शोकविहीनपरम् ॥ यदि चैकनिरंतरसर्वशिवं इह दुःख-विदुःखमनश्च कथम् ॥ १७ ॥ नसितासितवर्णविचार इति न परापरभेदविभाग इति ॥ यदि चैकनिरंतरसर्वशिवं ननु सार-विसारविभिन्नपरम् ॥ १८ ॥ नहि याज्ञिक-यज्ञविधानमिति नहुताशनवस्तुविधानमिति ॥ यदि चैकनिरंतरसर्वशिवं भवकर्मफलं विभवं च कथम् ॥ १९ ॥ यदि पूर्ण-विपूर्णविहीन इति यदि सर्वविवर्जितसर्वमिति ॥ यदि चैकनिरंतरसर्वशिवं इह तर्क-वितर्कपरं

च कथम् ॥ २० ॥ उपसंहृतभेदविभेद इति उपसंहृति-बुद्धि-विबुद्धि इति ॥ यदि चैकनिरंतरसर्वशिवं अविवेक-विवेकमतिश्च कथम् ॥ २१ ॥ ननु शोक-विशोकविमुक्त इति ननु दर्प-विदर्प-विमुक्त इति ॥ यदि चैकनिरंतरसर्वशिवं ननु राग-विरागमनश्च कथम् ॥ २२ ॥ नहि मोह-विमोहविकार इति नहि लोभ-विलोभविकार इति ॥ यदि चैकनिरंतरसर्वशिवं इहतेति कथम् ममतेति कथम् ॥ २३ ॥ त्वमहं नहि यत्र कदाचिदपि कुल-जातिविचारमसत्यमिति ॥ अहमेव शिवं परमार्थमिति अभिवंदनमत्र करोषि कथम् ॥ २४ ॥ गुरु-शिष्यविचारविशीर्ण इति उपदेशविचारविशीर्ण इति ॥ अहमेव शिवं परमार्थमिति अभिवंदनमत्र करोषि कथम् ॥ २५ ॥ नहि कल्पितवेदविभाग



इति नहि कल्पिततत्त्वविभाग इति ॥ अहमेव शिवं परमार्थमिति अभिवंदनमत्र करोषि कथम् ॥ २६ ॥ सरजाविरजा नकदाचि-दपि ननु निर्मल-निश्चलबुद्धिरिति ॥ अहमेव शिवं परमार्थमिति अभिवंदनमत्र करोषि कथम् ॥ २७ ॥ विंदति विंदति नहि नहि यत्र छंदोलक्षणं नहि नहितत्र ॥ समरसमग्नो भावितपूतः प्रभवति तत्त्वं परमवधूतः ॥ २८ ॥ ॥ ॐ तत्सदिति श्रीदत्तगीतासूपनिषत्सारमथितार्थेषु निरंजनविद्यायां श्रीदत्त-गोरक्षकसंवादे निर्वाणमोहद्वैतनिरूपणम् नाम पंचमोध्यायः ॥ ५ ॥

---

श्रीगणेशाय नमः ॥ गोरक्षक उवाच—विद्धिहिकर्परमाजिनं कंथा पुण्यापुण्यविवर्जितपंथा ॥ शून्यागारे समरसमग्नः शुद्धविशुद्धं

सततसमज्ञः ॥ १ ॥ लक्ष्यालक्ष्यविवर्जितलक्ष्यो युक्तायुक्तविवर्जितदक्षः ॥ केवलतत्त्वनिरंतरपूतो वाद-विवादः कथमवधूतः ॥ २ ॥ आशापाशविबंधनमुक्तः शौचाशौचविवर्जितयुक्तः ॥ एवं सर्वविवर्जितभोगी शुद्धनिरंजनसततं स योगी ॥३॥ श्रीदत्तात्रेय उवाच—कथमिह देही देहविचारः कथमिह रागी रागविचारः ॥ निर्मलनिश्चलगगनाकारं त्वहमिह तत्त्वं सहजाकारम् ॥ ४ ॥ गगनाकारनिरंतरहंसः तत्व-वितत्त्वंरहितोहंसः ॥ एवं कथमिह भिन्नविभिन्नं बंध-विबंधविकारविहिनं ॥५॥ वयमिह तत्त्वं विंदति यत्र रूप-विरूपं कथमिह तत्र ॥ गगनाकारं परमं यत्र विषयी करणं कथमिह तत्र ॥ ६ ॥ केवलतत्त्वनिरंतरसर्वं योगात्कथमिह गर्वं सत्यम् ॥ सत्यं संसारसारमसारमेवं कथमिह सारासारम् ॥ ७ ॥ केवलतत्त्वनिरंतरबुद्धं गगनाकारनिरंतरशुद्धम् ॥ एवं कथमिह संगविसंगं सत्यं कथमिह रंगविरंगम् ॥ ८ ॥ योग-वियोगं रहितो योगी भोगविभोगो रहितो भोगी ॥ संततसर्वविवर्जितमुक्तः संततसर्वविवर्जितयुक्तः ॥ ९ ॥ एवं कथमिह जीवितमरणं ध्यानाध्याने कथमिह करणम् ॥ १० ॥ इंद्रजालमिदं सर्वं यथा मरुमरीचिका ॥ अखंडितमनाकारं वर्तते केवलः शिवः ॥ ११ ॥ धर्मादिमोक्षपर्यंतं निरीहाः सर्वथा वयम् ॥ कथं राग-विरागं च कल्पयंती विपश्चितः ॥ १२ ॥ विंदति विंदति नहि नहि यत्र छंदोलक्षणं नहि नहि तत्र ॥ समरसमज्ञो भावितपूतः प्रभवति तत्त्वं परमवधूतः ॥ १३ ॥ ॐ तत्सदिति श्रीदत्तगीतासूपनिष-

त्सारमथितार्थेषु निरंजनविद्यायां श्रीदत्त-गोरक्षकसंवादे महा-
निर्वाणनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥



---

श्रीगणेशाय नमः ॥ बालस्य वा विषयभोगहतस्य वाऽपि
मूर्खस्य सेवकजनस्य ग्रहस्थितस्य ॥ गुह्यं परं किमपि नैव
विकासनीयं भ्रांतः कथं भजति कस्य यदि प्रदिष्टम् ॥ १ ॥
नैवात्र काव्यगुणदोषविवंचनीयो ग्राह्यं परं गुणवती खलु यस्य
वासी ॥ विभ्रांतचित्तरहिताद्भुवि रूपशून्यान् पारं नकिन्नयति
नापि त्विह त्रिकामात् ॥ २ ॥ प्रयत्नेन विना येन निश्चलेन
चराचरम् ॥ ग्रहस्तंभसमं शांतं चैतन्यं गगनोपमम् ॥ ३ ॥
अथ तत्त्वं पठेद्यस्तु एकएव चराचरम् ॥ सर्वमंग कथं भिन्नमद्वैतं
परमामृतम् ॥ ४ ॥ अहमेव परं यस्मात्सारात्सारतरं शिवम् ॥
गमागमविनिर्मुक्तं निर्विकल्पं निराकुलम् ॥ ५ ॥ पूर्णानंदं च
गृण्हामि विभोगात्रिदशार्चितम् ॥ समाधिनः समं देहं किंकरि-
ष्यामि तृप्तिमान् ॥ ६ ॥ उत्पद्यंते विलीयंते बुब्दुदाश्च जले
यथा ॥ महदादीनि भूतानि ममाप्येकं स एव हि ॥७॥ मृदुद्रवेषु
तीक्ष्णेषु गुणेषु कटकेषु च ॥ कठुत्वं मधुरत्वं च तीक्ष्णत्वं
मृदुलं यथा ॥ ८ ॥ प्रकृतिः पुरुषं तद्वन्नभिन्नं प्रतिभातिभो ॥
यच्च सर्वाख्यरहितं सूक्ष्मात्सूक्ष्मतरं परम् ॥ ९ ॥ मनोबुद्धीं-
द्रियातीतमकळंकं जगत्पतिम् ॥ अदृश्यं सह यत्र त्वमहं तत्र
कथं भवेत् ॥ १० ॥ त्वमेव परमं तत्त्वं यत्र यत्र चराचरम् ॥
गगनोपमं च यत्प्रोक्तं तदेव गगनं परम् ॥ ११ ॥ चैतन्यं

दोषरहितं संपूर्णं सर्वमेव च ॥ वसुधामंतरिक्षं च मारुतेन समाहितम् ॥ १२ ॥ उदके पिहितं चैव तेजोमध्ये व्यवस्थितम् ॥ आकाशं तेन संप्राप्तं नतव्याप्तं च केनचित् ॥ १३ ॥ सबाह्याभ्यंतरेसि त्वं स्थिरपूर्णनिरंतरम् ॥ सूक्ष्मत्वाच्चेददृश्यत्वं निर्मलत्वाच्च योगिभिः ॥१४॥ आलंबनादिर्यत्प्रोक्तं त्यक्तमालंबनं त्यजेत् ॥ ततोभाभ्यां च निर्मुक्तो निरालंबं यदा भवेत् ॥१५॥ वलयं लायते तात गुणदोषविवर्जितम् ॥ चित्स्वरूपस्य रौद्रस्य मोह-मूर्छा-द्रवस्य च ॥ १६ ॥ एक एवं विना यत्वममोघं सहजामृतम् ॥ भावगम्यं निराकारं साकारं दृष्टिगोचरम् ॥१७॥ भावाभावविनिर्मुक्तमंतराळं तदुच्यते ॥ बाह्यभावो भवेदिथ्थमतः प्रकृतिरुच्यते ॥ १८ ॥ अंतरादंतरं ज्ञेयं नारिकेळ फलं यथा ॥



पौर्णमास्यां तथा चंद्र एकएवोति निर्मलः ॥ १९ ॥ भ्रांतिज्ञानस्थितो बाह्ये सम्यग्ज्ञानं च मध्यमे ॥ मध्यान्मध्यतरं ज्ञेयं नारिकेळफलं यथा ॥ २० ॥ अनेनैव प्रकारेण बुध्दिभेदेन सर्वगः ॥ एष बुद्धोप्यनामा च गीयते नामकोटिभिः ॥ २१ ॥ गुरुप्रज्ञाप्रसादेन मूर्खो वा यदि पंडितः ॥ यस्तु संबुध्यते तत्त्वं विरक्तो भवसागरात् ॥ २२ ॥ राग-द्वेष-विनिर्मुक्तः सर्वतत्वहिते रतः ॥ दृढबोधश्च धीरश्च स गछेत्परमम् पदम् ॥ २३ ॥ घटे भिन्ने घटाकाशमाकाशे लीयते यथा ॥ देहाभावे तथा योगी स्वरूपे परमात्मनि ॥ २४ ॥ उक्तं यत्कर्म युक्तानां मतिर्यातेपि सा गतिः ॥ योगिनां या गतिः कापि अगत्याभावनोषितः ॥ २५ ॥ या गतिः कर्मयुक्तानां तां च वागींद्रियंवदेत् ॥

एवं ज्ञात्वाँ त्वमुं मार्गं योगिनां नैव कल्पितम् ॥ २६ ॥
विकल्पवर्जनं तेषां स्वयं सिद्धिः प्रवर्तते ॥ तीर्थे वांऽत्यजगेहे
वा यत्र यत्र मृतोपि वा ॥ २७ ॥ नयोगी पश्यते गर्भं परब्र-
ह्मणि लीयते ॥ सहजमजमचिंत्यं यस्तु पश्येत्स्वरूपं घटति
यदि यथेच्छं लिप्यते नैव दोषैः॥२८॥ सकृदपि यदभावात्कर्म
किंचिन्नकुर्यात्तदपि भवति बद्धः स्वयमेव वा तपस्वी ॥ निरामयं
निष्प्रतिमं निराकृतिं निराशयं निर्वपुषं निराशयम् ॥ २९ ॥
निर्द्वंद्वनिर्मोहमलुप्तशाक्तिकं तमीशमात्मनमुपैति शाश्वतम् ॥
विधौ नदीक्षा न च मंडलक्रिया गुरुर्नशिष्यो न च मंत्र-
संपदः ॥ ३० ॥ मुद्रादिकं चापि न यत्र मानसस्तमीशमा-
त्मानमुपैति शाश्वतम् ॥ नशांभवी शक्तिकमाणकं न वा पिंडं



च रूपं च पदादिकं न वा ॥ ३१ ॥ आरंभ-निष्पंदघटादिकं न
वा तमीशमात्मानमुपैति शाश्वतम् ॥ यस्य स्वरूपं च विपद्यते
जगच्चराचरं तिष्ठति लीयतेऽपि वा ॥ ३२ ॥ पयोविकारादिव
फेनबुद्बुदास्तमीशमात्मानमुपैति शाश्वतम् ॥ नानात्वमेकत्व-
भावत्व-मायात्वाणुत्व-दीर्घत्व-महत्वशून्यकम् ॥ ३३ ॥ मानत्व-
विद्यात्व-समाप्तवर्जितं तमीशमात्मानमुपैति शाश्वतम् ॥ नासा-
निरोधो न च दृष्टिरोधो बद्धो विबद्धो नशुभासतं सतः ॥ ३४ ॥
नास्य प्रचारोपि न यत्र किंचित्तमीशमात्मानमुपैति शाश्वतम्॥
सुसंयमी वा यदि वा नसंयमी निष्कर्मको वा यदि वा सक-
र्मकः ॥३५॥ अमानुषोघोनविमुच्यते ध्रुवं तमीशमात्मानमुपैति
शाश्वतम् ॥ मनो नबुद्धिर्नशरीरमिंद्रिये तदात्मभूतादिकभेदव-

र्जितः ॥ ३६ ॥ शौचं न लिंगं यदि भावनाशकं संविद्दयं वा यदि वा न विद्यते ॥ मनोनु वाक्चक्षुनशक्तिमीतरं कथं च तत्रैव गुरूपदेशं ॥ ३७ ॥ पयः कथं मुक्तवतं विभाजनं युक्तस्य तत्वं हिं समः प्रकाशते ॥ ३८ ॥ विंदाति विंदति नहि नाहि यत्र छंदोलक्षणं नहि नाहि तत्र ॥ समरसमज्ञो भावितपूतः प्रभवति तत्त्वं परमवधूतः ॥ ३९ ॥ ॐ तत्सदिति श्रीमद्दत्तगीतासूपनिषत्सारमथितार्थेषु निर्वाणविद्यायां दत्त-गोरक्षक संवादे महानिर्वाणयोगो नाम सप्तमोध्यायः ॥ श्रीदत्तात्रेयार्पणमस्तु ॥

---

## अथ दत्तसहस्रनाम प्रारभ्यते.



श्रीगणेशायनमः निर्विघ्नमस्तु ॥ श्रीदत्तात्रेयायनमः ॥ कदाचिल्छंकराचार्यश्चिंतायित्वा दिवाकरं ॥ किं साधितं मया लोके पूजनैश्चैववंदनैः ॥ १ ॥ बहु काले गते तस्य दत्तात्रेयो महा मुनिः ॥ स्वप्ने प्रदर्शयामास दिव्यं रूपमनुत्तमं ॥ २ ॥ उवाच शंकरं स्तोत्रं ममैतदवधारय ॥ प्राप्यसे त्वं सर्वसिद्धिं स्तोत्रमेवात्र कारणं ॥ ३ ॥ उपदेक्ष्ये दत्तनाम सहस्रं देवपूजितं ॥ ज्ञातुं वक्तुमशक्यं च रहस्यं मोक्षकामदं ॥ ४ ॥ जपेषु पुण्यतीर्थेषु चांद्रायणशतेषु च ॥ यज्ञ-व्रतादिदानेषु सर्वपुण्यफलप्रदं ॥५॥ दशवारं जपेन्नित्यं सर्वसिध्यत्यसंशयं ॥ एकेनोच्चारमात्रेण तत्स्वरूपं लभेन्नरः ॥ ६ ॥ योगत्रयं च लभते सर्व योगान्न संशयः ॥ माता-पितृस्वसॄणां च हत्यादिर्वा विनश्यति ॥ ७ ॥ अनेन यः किमित्युक्त्वा रौरवं नरकं व्रजेत् ॥ पठितव्यं श्रावि-

तव्यं श्रद्धाभक्तिमसन्वितैः ॥८॥ संकलीकृतपापैश्च मलिनीकर-
पातकैः ॥ पापकोटिसहस्रैश्च मुच्यते नात्र संशयः ॥ ९ ॥ यद्गृहे
संस्थितं स्तोत्रं दत्तनाम्नां सहस्रकं ॥ सर्ववश्यादिकर्मापि
समुच्चार्य जपेद्ध्रुवं ॥१०॥ तत्कार्यंचैव लभतेमोक्षवान् योगवान्
भवेत् ॥ ॥ अस्य श्रीमद्दत्तात्रेयसहस्रनामस्तोत्रमंत्रस्य ॥
ब्रह्मरुद्रऋषी ॥ गायत्रीछंदः ॥ श्रीमद्दत्तपुरुषपरमहंसपरमात्मा
देवता ॥ हंसोहंसायविद्महे इति बीजं ॥ सोहंसोहंचधीमहीति-
शक्तिः हंसःसोहंप्रचोदयात् ॥ इतिकीलकं ॥ श्रीपरमपुरुषपरम-
हंसपरमात्मप्रीत्यर्थे श्रीदत्तसहस्रनास्तोत्रजपेविनियोगः ॥ अथ-
न्यासः ॥ ॐ सोहंगणेशाय अंगुष्टाभ्यांनमः ॥ हंसःप्रजापतये तर्ज-
नीभ्यां॰ हंसोमहाविष्णवे मध्यमाभ्यां॰ हंसःशंभवे अनामिका-



भ्यांनमः ॥ हंसःप्रजापतये कनिष्ठिकाभ्यां नमः ॥ हंसोगुरवे
करतलकरपृष्ठाभ्यांनमः ॥ ॥ अथ हृदयादिन्यासः—हंसः सोहं
श्रीपरमाय हृदयाय॰ ॥ हंसः सोहं पुरुषाय शिरसे॰ ॥ हंसः
सोहं परमहंसाय शिखायैवषट् ॥ हंसः सोहं दत्तात्रेयाय
कवचायहुं ॥ हंसः सोहं परमात्मने नेत्रत्रयाय वौषट् ॥ हंसः
सोहं प्रचोदयात् अस्त्रायफट् ॥ ॐ भूर्भुवः स्वरोमिति दिग्बंधः॥
अथ ध्यानं—बालार्कप्रभमिंद्रनीलजटिलं भस्मांगरागोज्वलं शांतं
नादविलीनचित्तपवनं शार्दूलचर्मांबरम् ॥ ब्रह्मज्ञैः सनकादिभिः
परिवृतं सिद्धैर्महायोगिनं दत्तात्रेयमुपास्महे हृदि मुदा ध्येयं सदा
योगिभिः ॥ १ ॥ ॐ ॥ श्रीमान्देवो विरूपाक्षो निपुणः पुरुषो-
त्तमः ॥ ब्रह्माक्षरो यतिर्नाथो दीनबंधुः कृपानिधिः ॥ १ ॥ सार-

स्वतो मुनिर्मुख्यस्तेजस्वी भक्तवत्सलः ॥ धर्माधर्ममयो धर्मो धर्मदो धर्मभावनः ॥ २ ॥ भाग्यदो भोगदो भोगी भाग्यवान् भानुरंजनः ॥ भास्करो भयहर्ता च भवभूर्भवतारणः ॥ ३ ॥ कृष्णो लक्ष्मीपतिर्देवः पारिजतापहारकः ॥ सह्याद्रिनिलयः शंभूर्वेंकटाचलवासकः ॥ ४ ॥ कोल्हापुरःश्रीजपवान् माडुरोर्जितभिक्षकः ॥ सेतुतीर्थविशुद्धात्मा रामध्यानपरायणः ॥ ५ ॥ रामचित्तो रामगुरू रामात्मा रामदैवतः ॥ रामशिष्यो रामराज्ञो रामैकाक्षरतत्परः ॥ ६ ॥ श्रीरामचंद्रविख्यातो राममंत्राब्धिपारगः ॥ रामभक्तो रामसखा रामवान् रामहर्षणः॥७॥ अनुसूयात्मजो देवो दत्तश्चात्रेयनामकः ॥ सुरूपः सुमतिः प्राज्ञः श्रीदो वैकुंठवल्लभः ॥ ८ ॥ विराजस्थानकः श्रेष्ठः सर्वो



नारायणः प्रभुः ॥ कर्मज्ञः कर्मनिरतो नृसिंहो वामनोच्युतः॥९॥ कविः काव्यो जगन्नाथो जगन्मूर्तिरनामयः ॥ मत्स्यः कूर्मो वराहश्च हरिः कृष्णो महास्मयः ॥ १० ॥ रामो रामो रघुपतिर्बुद्धः कल्की जनार्दनः ॥ गोविंदो माधवो विष्णुः श्रीधरो देवनायकः ॥ ११ ॥ त्रिविक्रमः केशवश्च वासुदेवो महेश्वरः ॥ संकर्षणः पद्मनाभो दामोदरवरः शुचिः ॥१२॥ श्रीशैलवनचारी च भार्गवस्थानकोविदः ॥ अहोबलनिवासी च स्वामिपुष्करणीप्रियः ॥ १३ ॥ कुंभकोणनिवासी च कांचीवः सीरसेखरः ॥ रसानुभक्तो सिद्धेशः सिद्धिमान् सिद्धिवत्सलः ॥ १४ ॥ सिद्धरूपः सिद्धिविधिः सिद्धाचारप्रवर्तकः ॥ रसाहारो विषाहारो गंधकादिप्रवेशकः ॥ १५ ॥ योगी योग-

परो राजा धृतिमान् मतिमान् सुखी ॥ बुद्धिमान् नीतिमान् बाल-उन्मत्तो ज्ञानसागरः ॥ १६ ॥ योगिस्तुतो योगिवंद्यो योगिचंद्रो यतीश्वरः ॥ योगादिमान् योगरूपो योगी योगिषु पूजितः ॥ १७ ॥ कृष्णयोगी दृढप्राज्ञो लंबिकायोगवान् दृढः ॥ खेचरश्च खगः पूषा रश्मिमान् भूतभावनः ॥ १८ ॥ ब्रह्मज्ञः सनकादीज्यः श्रीपतिः कार्यसिद्धिमान् ॥ स्पृष्टास्पृष्टविहीनात्मा योगज्ञो योगमूर्तिमान् ॥ १९ ॥ मोक्षश्रीर्मोक्षदो मोक्षी मोक्षरूपो विशेषवान् ॥ सुखप्रदः सुखः सौख्यः सौख्यरूपः सुखात्मकः ॥ २० ॥ रात्रिरूपो दिवारूपः संध्यात्मा कालरूपकः ॥ कालः कालविकर्णश्च बलप्रभुरतुल्यकः ॥ २१ ॥ सहस्रशीर्षापुरुषो वेदात्मा वेदपारगः ॥ सहस्रचरणोनंतः सहस्राक्षो जितें-



द्रियः ॥ २२ ॥ स्थूलः सूक्ष्मो निराकारो निर्मोहो भक्तमोहवान् ॥ महीयान् परमाणुश्च जितक्रोधो भयापहः ॥ २३ ॥ योगानंदप्रदायी च योगो योगविशारदः ॥ नित्यो नित्यात्मवान् योगी नित्यपूर्णो निरामयः ॥ २४ ॥ दत्तात्रेयो देवदत्तो योगी परमभास्वरः ॥ अवधूतः सर्वनाथः सत्कर्ता पुरुषोत्तमः ॥ २५ ॥ ज्ञानी लोकविभुः कांतः शीतोष्णसमबुद्धिकः ॥ विद्वेषिजनसंहर्ता धर्मबुद्धिविचक्षणः ॥ २६ ॥ नित्यतृप्तो विशोकश्च द्विभुजः कामरूपकः ॥ कल्याणाभिजनो धीरो विशिष्टः सुविचक्षणः ॥ २७ ॥ श्रीमद्भागवतार्थज्ञो रामायणविशेषवान् ॥ अष्टादशपुराणज्ञः षट्दर्शनविजृंभकः ॥ २८ ॥ निर्विकल्पः सुरश्रेष्ठ उत्तमो लोकपूजितः ॥ गुणातीतो गुणी

पूर्णो ब्रह्मण्यो द्विजसंवृतः ॥ २९ ॥ दिगंबरो महाज्ञेयो विश्वात्मा च परायणः ॥ वेदांतःश्रवणो वेदी कलावान्निष्कलंकवान् ॥ ३० ॥ मितभाष्यो मिताभाषी सौम्यो रामो जयः शिवः ॥ सर्वजित्सर्वसौभद्रो जयाकांक्षी सुखावहः ॥ ३१ ॥ प्रत्यर्थ्यकीर्तिसंहर्ता मंदारार्चितपादुकः ॥ वैकुंठवासी देवेशो विरजास्नानमानसः ॥ ३२ ॥ श्रीमेरुनिलयो योगी बालार्कसमकांतिमान् ॥ रक्तांगः श्यामलांगश्च बहुवेषो बहुप्रियः ॥३३॥ महालक्ष्म्यन्नपूर्णेशः स्वधाकारो यतीश्वरः ॥ स्वर्णरूपः स्वर्णदायी मूलिकायंत्रकोविदः ॥ ३४ ॥ अचिंत्यमूलिकायंत्रो भक्ताभीष्टप्रदो महान् ॥ शांताकारो महामायो माहुरस्थो जगन्मयः ॥ ३५ ॥ महाशनश्च सूक्ष्माशी निराहारो निरुद्यमः ॥

ध्यानात्मा ध्यानयोगात्मा ध्यानस्थो ध्यानतत्परः ॥ ३६ ॥ सत्यध्यानः सत्यमयः सत्यरूपनिजाकृतिः ॥ त्रिलोकगुरुरेकात्मा भस्मोध्दूलितविग्रहः ॥३७॥ प्रियाप्रियसमः पूर्णो लाभालाभसमप्रियः॥सुख-दुःखसमो धीमान् हिताहितसमप्रियः ॥ ३८ ॥ गुरुर्ब्रह्मा च विष्णुश्चमहाविष्णुः सनातनः ॥ सदाशिवो महेंद्रश्च गोविंदो मधुसूदनः ॥ ३९ ॥ कर्ता कारयिता रुद्रः सर्वचारी तु याचकः ॥ संपत्प्रदो वृष्टिरूपस्तपोरूपस्तपप्रियः ॥ ४० ॥ तपोमूर्तिस्तपोराशिस्तपस्वी च तपोधनः ॥ तपोमयस्तपः शुद्धो जनको विश्वसृड् विधिः ॥ ४१ ॥ तपःसिद्धस्तपःसाध्यस्तपःकर्ता तपःक्रतुः ॥ तपःशमस्तपःकीर्तिस्तपोदारस्तपोमयः ॥४२॥ तपोरेतास्तपोज्योतिस्तपात्मा चात्रिनंदनः ॥ निःकल्मषो नि-

ष्कपटो निर्विघ्नो धर्मभीरुकः ॥ ४३ ॥ वैद्युतस्तारकः कर्म
वैदिको ब्राह्मणो यतिः ॥ नक्षत्रतेजा दीपात्मा परिशुद्धो विम-
त्सरः ॥ ४४ ॥ जटिः कृष्णाजिनधरो व्याघ्रचर्मधरो वशी ॥
जितेंद्रियश्चीरवासाः शुक्लवस्त्रांबरो हरिः ॥ ४५ ॥ चंद्रानुजश्चं-
द्रमुखः शुक्लयोगी वरप्रदः ॥ दिव्ययोगी पंचतपा माषः षाड्वत्स-
रासनः ॥ ४६ ॥ भूतज्ञो वर्तमानज्ञो ह्येष्यज्ञो धर्मवत्सलः ॥
प्रजाहितः सर्वहितो ह्यनिंद्यो लोकवंदितः ॥ ४७ ॥
आकुंचयोगसंबद्धमलमूत्ररसादिकः ॥ कनकीभूतनिलयो जयो
योगविचक्षणः ॥ ४८ ॥ शकटादिविशेषज्ञो लंबिकानित्यत-
त्परः ॥ प्रपंचरूपी बलवानेककौपीनवस्त्रकः ॥ ४९ ॥ दिगं-
बरः सोत्तरीयः सजटी सकमंडलुः ॥ निर्दंडश्च सदंडश्च स्त्रीवेषी



पुरुषाकृतिः ॥५०॥ तुलसीकाष्ठमाली च रौद्रस्फटिकमालिकः ॥
निर्मालिकः शुद्धतरः स्वेच्छामरणवान्परः ॥ ५१ ॥ ऊर्ध्व-
पुंड्रस्त्रिपुंड्रांको द्वंद्वहीनः सुनिर्मलः ॥ निर्जटः सजटो हेयो भस्म-
शायी सुभोगवान् ॥५२॥ मूत्रस्पर्शो मलस्पर्शो जातिहीनः सुनि-
र्मलः ॥ अभक्षभक्षो निर्भक्षो जनदूषितदेहवान् ॥ ५३ ॥ भूषणा
दूषणसमः कालोकालो दयानिधिः ॥ बालप्रियो बालकविर्बल-
वानतिबालकः ॥ ५४ ॥ बालक्रीडो बालरतो बालसंघट्टतो
बली ॥ बाललीलाविनोदश्च कर्णाकर्णार्षिकारकः ॥ ५५ ॥
रथ्यानीकवणिक् पण्यो गुडसूपाद्यभक्षकः ॥ बालक्रीडितसं-
त्दृष्टो मुष्टियुद्धकरश्चलः ॥ ५६ ॥ अदृश्यो दृश्यमानश्च द्वंद्वयुद्ध-
प्रवर्तकः ॥ पक्कायमानो बालाढ्यो हासबालसुसंगतः ॥ ५७ ॥

प्रत्यागतः पुनर्गच्छच्चक्रबाहुर्मनःफलः ॥ चोरवद्धतसर्वस्वो जडताडितदेहवान् ॥ ५८ ॥ प्रहसन्प्रवदो दत्तो दिव्यमंगलविग्रहः ॥ मायाबालश्च मायावी पूर्णलीलो मुनीश्वरः ॥ ५९ ॥ माहुरेशो विशुद्धात्मा यशस्वी कीर्तिमाल्यवान् ॥ सविकल्पः सच्चिदाभो गुणवान् सौम्यभावनः ॥ ६० ॥ पिनाकी शशिमौलिश्च वासुदेवो दिवस्पतिः ॥ सुशिराः सूर्यतेजश्च त्रिभंगीरोष्ठउन्नतः ॥ ६१ ॥ दशपद्मस्त्रिशीर्षश्च लोकव्याप्तो द्विशुक्कवान् ॥ त्रिरात्रिश्च त्रिताम्रश्च त्रिलोकश्च त्रियंबकः ॥ ६२ ॥ चतुरंगस्त्रिवर्णश्च त्रिकामो हंसवाहनः ॥ चतुष्कलश्चतुर्दंष्ट्रो गतिः शंभुः प्रियोम तः ॥ ६२ ॥ चतुर्गतिर्महादंष्ट्रो वेदांगी चतुराननः ॥ पंचसिद्धो महायोगी महाद्वादशगोऽनघः ॥६४॥



चतुर्मुखो नरतनुरजेयश्चाष्टवंशवान् ॥ चतुर्दशसुवद्वंद्यो मुकुरांको दशांशवान् ॥ ६५ ॥ वृषांको वृषभारूढश्चंद्रतेजाः सुदर्शनः ॥ सामप्रियो महेशानश्चिदाकारो नरोत्तमः ॥ ६६ ॥ दयावान् करुणापूर्णो महेंद्रो माहुरेश्वरः ॥ वीरासनसमासीनो रामो रामपरायणः ॥ ६७ ॥ इंद्रो वन्हिर्यमः कांतो निर्ऋतिर्वरुणालयः ॥ वायुश्चंद्रश्च ईशानो लोकपालो महायशाः ॥ ६८ ॥ यक्ष-गंधर्व-नागाश्च किंनरः सिद्धरूपकः ॥ विद्याधरश्चाधिपतिश्चारणः पन्नगेश्वरः ॥ ६९ ॥ चंडिकेशः प्रचंडश्च घंटानादरतःप्रियः ॥ वीणाध्वनिर्वैनतेयो नारदस्तुंबुरुर्धनः ॥ ७० ॥ वीणाप्रचंडसौंदर्यो राजीवाक्षश्च मन्मथः ॥ चंद्रो दिवाकरो गोपः केसरी सोमसोदरः ॥ ७१ ॥ सनकः शुकयोगी च नदी

षण्मुखरागकः ॥ गणेशो विघ्नराजश्च चंद्राभो विजयो जयः ॥ ७२ ॥ असितः कालचक्रश्च तामसः कालदंडवान् ॥ विष्णुश्चक्रात्रिशूलध्रो ब्रह्मदंडो विरुद्धकः ॥ ७३ ॥ ब्रह्मास्त्ररूपी सत्येंद्रः कीर्तिमान् गोपतिर्भवः ॥ वसिष्ठो वामदेवश्च जाबालिः कार्यरूपकः ॥ ७४ ॥ सर्वर्तुरूपो मौद्गल्यो मार्कंडेयश्च कश्यपः ॥ त्रिजटो गार्ग्यरूपश्च चारुनासो महोदयः ॥ ७५ ॥ त्वष्टा निशाकरः कर्म कश्यपश्चारुरूपवान् ॥ जमदग्निः सर्वरूपः सर्वानंदो यतीश्वरः ॥ ७६ ॥ अश्वरूपी वैद्यपतिर्गरकंठोंबिकार्चितः॥ चिंतामणिः कल्पवृक्षो रत्नाब्धिरुदधिप्रियः ॥ ७७ ॥ महामंडूकरूपी च कालाग्निसमविग्रहः ॥ आधारशक्तिरूपी च कूर्मः पंचाग्निरूपकः ॥ ७८ ॥ क्षीरार्णवो महीरूपो वराहश्चे-



प्सितावनिः ॥ ऐरावतोर्जुनः पद्मो वामनः कुमुदात्मवान् ॥ ७९ ॥ पुंडरीकः पुष्पदंतो मेघच्छत्रोभ्रचारकः ॥ सितोत्पलाभो द्युतिमान् मूढोरस्कः सुरार्चितः ॥ ८० ॥ पद्मनाभः सुनाभश्च दशशीर्षा शतोदरः ॥ अवाङ्मुखः पंचवक्त्रो रक्षकात्मा द्विरूपवान् ॥ ८१ ॥ स्वर्णमंटपसंचारी वेदिस्थः सर्वपूजितः ॥ सुप्रसन्नः प्रसन्नात्मा स्वभक्ताभिमुखो मृदुः॥८२॥ अवाहितः सन्निहितो वरदो ज्ञानवान् स्थिरः ॥ शालग्रामात्मको ध्येयो रत्नसिंहासने स्थितः ॥८३॥ अर्घ्यप्रियः पाद्यतुष्टः स्वजनार्चितपादुकः ॥ पंचामृतस्नानविधिः शुद्धोदकसुसेचितः ॥८४॥ गंधाक्षतैःसुसंप्रीतः पुष्पालंकारभूषणः ॥ अंगपूजाप्रियः सर्वो महाकीर्तिर्महाभुजः ॥ ८५ ॥ नानापूजाविशेषज्ञः सर्वनाम-

स्वरूपकः ॥ धूपितो दिव्यरूपात्मा दीपितो बहुदीपवान्॥८६॥
बहुनैवेद्यसंहृष्टो नीराजनविराजितः ॥ सर्वार्थरंजितो नंदः सौ-
ख्यवान्धनलार्जनः ॥ ८७ ॥ विरागो निर्विरोगश्च पैशाचांगो
विभूतिकः ॥ उन्मत्तो भ्रांतचित्तश्च शुभचित्तः शुभाकृतिः ॥८८॥
सुरैरिष्टो लघिष्ठश्च बहिष्ठो बहुदायकः ॥ महिष्ठः सुमहौजाश्च
बालिष्ठः सुप्रतिष्ठकः ॥ ८९ ॥ काशीगंगांबुमज्जश्च कोल्हाश्री-
मंत्रजापकः ॥ त्रिपुंड्रांकितभालश्च सर्वांगालिप्तभूतिकः ॥ ९० ॥
अनादिनिधनो योगी भार्गवी द्युः सनातनः ॥ तापत्रयोपश-
मनो वनवासो महोदयः ॥ ९१ ॥ ज्येष्ठः श्रेष्ठो महारुद्रः काल-
मूर्तिः सुनिश्चयः ॥ ऊर्ध्वः समूर्ध्वलिंगश्च हिरण्यो हेमलिंगवान् ॥
॥ ९२ ॥ सुवर्णः स्वर्णलिंगश्च दिव्यमूर्तिर्दिवस्पतिः ॥ दिव्य-



लिंगो भवो भव्यः सर्वलिंगस्तु सर्वकः ॥ ९३ ॥ शिवलिंगः
शिवमयो ज्वालितोज्ज्वललिंगवान् ॥आत्माचैवात्मालिंगश्च परमो
लिंगपारगः ॥ ९४ ॥ सोमःसूर्यो लिंगपाणिः करपात्रः पवित्र-
वान् ॥ सद्योजातस्तमोरूपो भवोद्भव अनीश्वरः ॥९५॥ तत्स्व-
रूपश्च सविता वरेण्यश्च प्रचोदनः ॥ दूरदृष्टिर्दूरगतो दूरः
श्रवणतर्पितः ॥ ९६ ॥ योगपीठास्थितो विद्वान्नमस्कारितरा-
सभः ॥ नमस्कृतः पुनश्चापि वज्राकृतिरितीक्षणः ॥ ९७ ॥
ज्वलन्मुखः प्रतिवाणीसखड्गो द्रावितप्रजः ॥ पशुघ्नश्च रसो-
न्मत्तो रसोर्ध्वमुखरंजितः ॥ ९८ ॥ रसप्रियो रसात्मा च
रसरूपो रसेश्वरः ॥ रसाधिदैवतो भूमो रसांगो रसभावनः ॥
॥ ९९ ॥ रसमयो रसकश्चैव रसेंद्रो रसपूजकः ॥ रससिद्धः

सिद्धरसो रसद्रव्यो रसोन्मुखः ॥ १०० ॥ रसांकितो रसापूर्णो रसदो रसिको रसः ॥ गंधकादस्तालकादो गौरीस्फटिक-सेवनः ॥ १०१ ॥ कायसिद्धः कायरुचिर्बद्धकायस्तु कायवान् ॥ अभेदी जनकर्ता च शंख-चक्र-गदाधरः ॥ २ ॥ कृष्णाजिनो किरीटी च श्रीकृष्णाजिनकंचुकः ॥ मृगरूपी मृगेंद्रश्च गजरूपो गजेश्वरः ॥ ३ ॥ दृढव्रतः सत्यवादी कृतज्ञो बलवान्बलः ॥ गुणवान् वीर्यवान्दाता कृतशोभी दुरासदः ॥ ४ ॥ सुचरित्रो भूतहितः समर्थश्चांडनायकः ॥ संपूर्णदृष्टिरक्षुद्रो जनैकप्रिय-दर्शनः ॥ ५ ॥ नियतात्मा पद्मधरो ब्रह्मवांस्थानसूचकः ॥ उछ्रवृत्तिरवीक्षश्च राजयोगी सुमालिकः ॥ ६ ॥ सुकुमारो जरा-हीनश्चोरघ्नो मदिरेक्षणः ॥ सुपादः स्वंगुलीकश्च सुनाभो जघनो-



त्तमः ॥ ७ ॥ सुपार्श्वः सुस्तनो नीलःसुवक्षः शुभजानुकः ॥ ८ ॥ नीलग्रीवो महास्कंधः सुभुजो दिव्यजंघकः ॥ सुहस्तरेखो लक्ष्मीवान् दीर्घपृष्ठोथ निश्चलः ॥ ९ ॥ बिंबोष्ठः शुभदंतश्च विद्युज्जिव्हः सुतालुकः ॥ दीर्घनासाः सुताम्रोष्ठः सुकपोलः सुकर्णकः ॥ १० ॥ उन्मीलितो मीलितश्च विशालाक्षश्च सुभ्रुकः ॥ सुभ्रूमध्यः सुभालश्च सुशिरा नीललोमकः ॥ ११ ॥ विशाखो ग्रामणी स्कंदः शिखिवर्णो विभावसुः ॥ कैलासेशो विचित्रज्ञो वैकुंठेंद्रो विचित्रवान् ॥ १२ ॥ मानसेंद्रश्चक्रबालो महेंद्रो मंदराधिपः ॥ मलयो विंध्यरूपश्च हिमवान् मेरुरूपकः॥ ॥ १३ ॥ सुवेलाचलरूपात्मा मैनाको गंधमादनः ॥ विंध्याच-लश्च वेलाद्रिः श्रीशैलः कर्कवासकः ॥ १४ ॥ नागाचलश्चित्र-

कूटो दुर्वासाः पर्वतात्मकः ॥ यामुनः कृष्णवेणीशो भद्रेशो गौतमीपतिः ॥ १५ ॥ गोदावरीशो गंगात्मा शोणकः कौशिकीपतिः ॥ नर्मदेशस्तु कावेरी ताम्रपर्णीचरोजटी ॥ १६ ॥ सरिद्रूपो नदात्मा च समुद्रः सरिदीश्वरः ॥ ल्हादिनीशः पावनीशो मालिनीशः सुचक्षुमान् ॥ १७ ॥ सितानदीपतिः सिंधूदेवेशः सुरसापतिः ॥ लवणेक्षुः क्षीरनिधिः सुधाब्धिः सर्पिरंबुधिः ॥१८॥ दध्याब्धिः शुचिजालाब्धिस्तत्स्वरूपो धनाधिपः ॥ भूपालमधुरागज्ञो मालवीरागकोविदः ॥ १९ ॥ गूढक्रियाज्ञः श्रीरामो नानारागार्णवांतगः ॥ वेदादिरूपो ऱ्हींरूपो ऱ्हंरूपः क्लींविकारकः ॥२०॥ भ्रंमयः क्लींमयः प्ररूयो ह्रंमयःक्रोंमयो भटः ॥ छ्रिंमयो लुंमयो गांगो ठांमयः खंमयः खगः ॥ २१ ॥ घंमयो



ङंमयश्चांगो विच्छंगो बीजजंमयः ॥ उंकरष्टोंकरष्टुंगो डंकरो ढंकरोणुभाक् ॥२२॥ टंकरस्तुंगो द्रांमुद्रो द्रींमुद्रारूपकः सुधीः ॥ दक्षो दंडी दानवघ्नस्तथातिद्दंद्दवान्मदः ॥२३॥ धंरूपो नंस्वरूपश्च पंकजाक्षश्च कंमयः ॥ ब्रह्मेंद्रो मधुभोक्ता च भंदरेतास्तु मंमयः ॥ रांमयो रिंकरो रंगो लंकरोवंमयस्करः ॥ शंकरः षण्मुखो हंसः संकरःक्षंकरःक्षयः ॥२५॥ ॐमित्येकाक्षरात्मा च सर्वबीस्वरूपकः॥ श्रीकरः श्रीपदः श्रीशः श्रीनिधिः श्रीनिकेतनः ॥ २६ ॥ पुरुषोत्तमः सुखो योगी दत्तात्रेयो हरिप्रियः ॥ सत्ययुक्तः सदायोगी निरंततपसोधिपः ॥ २७ ॥ पुरुषोत्तमो यातिःश्रेष्ठो दत्तात्रेयः सुखात्मवान्॥ वसिष्ठ वामदेवान्यो दत्तः पुरुष ईडितः॥ ॐश्रीदत्तः पुरुषईडितॐ नम इति ॥ २८ ॥ य इदं श्रृणुया-

न्नित्यं ब्रह्मसायुज्यतां व्रजेत् ॥ स यावत्तिष्ठते यस्मिन् तावत्ति-
ष्ठति तत्सुखी ॥ २९ ॥ भुक्तिर्मुक्तिः करस्थास्य नात्र कार्या
विचारणा ॥ आयुष्मत्पुत्रपौत्रांश्च दत्तात्रेयः प्रदर्शयन् ॥ ३० ॥
धन्यं यशस्यमायुष्यं पुत्रारोग्यविवर्धनम् ॥ करोति लेखनादेव
परार्थं वा न संशयः ॥ ३१ ॥ यःकरोत्युपदेशं च दत्तनामसह-
स्रकम् ॥ स चापि याति सायुज्यं श्रीमाँच्छ्रीमान्नसंशयः ॥३२॥
पठनाच्छ्रवणाद्वापि सर्वान्कामानवाप्नुयात् ॥ खेचरत्वं कार्यसिद्धिं
योगसिद्धिमवाप्नुयात् ॥ ३३॥ ब्रह्मराक्षस-वेताळैः पिशाचैः कामि-
नीमुखैः ॥ पीडाकारैर्दुःखकरैर्ग्रहदुष्टैर्नबाध्यते ॥ ३४ ॥ दुरा-
वासोपि मुच्येत सकृदुच्चारणेन तु ॥ यस्मिन्देशे स्थितं चैतत्
पुस्तकं दत्तनामकम् ॥३५॥ पंचयोजनविस्तारं रक्षयेन्नात्र संश-



यः ॥ सर्वबीजसमायुक्तं स्तोत्रं नामसहस्रकम् ॥३६॥ सर्वमंत्र-
स्वरूपं च दत्तात्रेयस्वरूपकम् ॥ एकवारं पठित्वा तु ताम्रपात्रे
जलं स्पृशन् ॥ ३७ ॥ पीत्वाच सर्वरोगैश्च मुच्यते नात्र
संशयः ॥ स्त्रीवश्यं पुरुषवश्यं च राजवश्यं जयावहम् ॥३८॥
संपत्प्रदं मोक्षकरं पठेन्नित्यमतंद्रितः ॥ र्हीयतेस्मिन् प्रपंचार्थो
वैरिशोकादिकारकः ॥ ३९ ॥ पठनात्तु प्रसन्नोहं शंकराचार्य-
बुद्धिदः ॥ भविष्यामि न संदेहः पठनात्प्रातरेव हि ॥ ४० ॥
उपदेक्ष्ये सर्वयोगाँल्लंबिकादिबहुज्वरान् ॥ दत्तात्रेयस्त्वेवमुक्त्वा
स्वप्ने चांतरधीयत ॥ ४१ ॥ स्वप्नादुत्थाय चाचार्यः शंकरो
विस्मयं गतः ॥ स्वप्नोपदेशितं स्तोत्रं दत्तात्रेयेण योगिना ॥४२॥
सहस्रनामकं दिव्यं पठित्वा योगवान् भवेत् ॥ ज्ञानयोगं

यतित्वं च परकायप्रवेशनम् ॥ ४३ ॥ बहुविद्या खेचरत्वं दीर्घायुस्तत्प्रसादतः ॥ तदारभ्य भुवि श्रेष्ठः प्रसिद्धश्चाभवद्यतिः ॥ १४४ ॥ ॥ इति श्रीमच्छंकराचार्यस्वप्नावस्थायां दत्तात्रेयोपदिष्टं सकलपुराणवेदोक्तप्रपंचार्थसारवत्सहस्रनामस्तोत्रं संपूर्णम् ॥ श्रीगुरुदत्तात्रेयार्पणमस्तु ॥ ॥ दत्तात्रेयो हरिः कृष्णो उन्मादोनंददायकः॥ मुनिर्दिगंबरो बालो पिशाचो ज्ञानसागरः ॥ १ ॥ एतानि दशनामानि सर्वकाले सदा पठेत् ॥ भूतापस्मारकोष्ठार-तापज्वरनिवारणम् ॥ २ ॥ कदा योगी कदा भोगी कदा नग्नपिशाचवत् ॥ अनुसूयागर्भसंभूतो दत्तात्रेयो महामुनिः ॥३॥ ॥ इतिदत्तात्रेय दशनामस्तोत्रं संपूर्णम् ॥छ॥ ॥ श्रीदत्तं नारदं व्यासं शुकंच पवनात्मजम् ॥ कार्तवीर्यं च



गोरक्षं सप्तैते स्मृतिगामिनः ॥ १ ॥ कृतवीर्यसुतो राजा सहस्रभुजमंडलः ॥ अवतारो हरेः साक्षात् पालयेत्सकलांमहीम् ॥२॥ इति श्रीगुरुदत्तात्रेयसहस्रनामस्तोत्रं संपूर्णम् ॥छ॥ श्रीगुरुदेवदत्तात्रेयार्पणमस्तु ॥ छ ॥ ॥ छ ॥ ॥ १७ ॥

## अथ दत्तात्रेयस्तोत्रम्.

श्रीगणेशाय नमः ॥ जटाधरं पांडुरंगं शूलहस्तं कृपानिधिम् ॥ सर्वरोगहरं देवं दत्तात्रेयं नमाम्यहम् ॥ १ ॥ अस्य श्रीदत्तात्रेयस्तोत्रमहामंत्रस्य ॥ भगवान् नारदोऋषिः ॥ अनुष्टुप् च्छंदः ॥ श्रीदत्तःपरमात्मा देवता ॥ श्रीदत्तप्रीत्यर्थे जपे विनियोगः ॥ जगदुत्पत्तिकर्त्रेच स्थिति-संहारहेतवे ॥ भवपाशमुचे श्रीमद्दत्ता-

त्रेय नमोस्तु ते ॥१॥ जरा-जन्मविनाशाय देहशुद्धिकराय च ॥ दिगंबर दयामूर्ते दत्तात्रेयायतेनमः ॥२॥ कर्पूरकांतिदेहाय ब्रह्म-मूर्तिधराय च ॥ वेदशास्त्रप्रतिज्ञाय दत्तात्रेयाय० ॥ ३ ॥ ऱ्हस्व दीर्घ-कृश-स्थूल-नाम-गोत्रविवर्जितः ॥ पंचभूतिकदीप्ताय दत्ता-त्रेयाय० ॥ ४ ॥ यज्ञभोक्त्रे च यज्ञाय यज्ञरूपधराय च ॥ यज्ञ-प्रियाय सिद्धाय दत्तात्रेयाय ते० ॥ ५ ॥ आदौ ब्रह्मा मध्ये विष्णुरंते देवः सदाशिवः ॥ मूर्तित्रयस्वरूपाय दत्तात्रेयाय ते० ॥ ६ ॥ भोगालयाय भोग्याय योगयोग्याय धारिणे ॥ जितेंद्रियजितज्ञाय दत्तात्रेयाय ते० ॥७॥ दिगंबराय दिव्याय दिव्यरूपधराय च ॥ सदोदितपरब्रह्म दत्तात्रेय नमोस्तुते ॥८॥ जंबुद्वीपे महाक्षेत्रे मातापुरनिवासिने ॥ जायमान नते देव



दत्तात्रेय नमोस्तु ते ॥ ९ ॥ भिक्षाटनं गृहे ग्रामे पात्रं हेममयं करे ॥ नानास्वादमयी भिक्षा दत्तात्रेय न०॥१०॥ ब्रह्मज्ञानमयी मुद्रा वस्त्रमाकाशभूतले ॥ प्रज्ञानघनबोधाय दत्ता० ॥ ११ ॥ अवधूत सदानंद परब्रह्मस्वरूपिणे ॥ विदेह देहरूपाय दत्ता-त्रेय० ॥ १२ ॥ सत्यरूप सदाचार सत्यधर्मपरायण ॥ सत्याश्रय परोक्षाय दत्तात्रे०॥१३॥ शूलहस्तसदापाणे वनमालासुकंधर ॥ यज्ञसूत्रधर ब्रह्म दत्ता० ॥ १४ ॥ क्षराक्षरस्वरूपाय परात्पर पराय च ॥ दत्तमूर्ति परस्तोत्र दत्तात्रेय नमोस्तु ते ॥ १५ ॥ दत्तविद्याय लक्ष्मीश दत्तआत्मस्वरूपिणे ॥ गुण-निर्गुणरूपाय दत्तात्रेय० ॥ १६ ॥ शत्रुनाशकरं स्तोत्रं ज्ञान-विज्ञानदायकम् ॥ सर्वपापशमं याति दत्तात्रेय नमोस्तु ते ॥ १७ ॥ इदं स्तोत्रं

महादिव्यं दत्तप्रत्यक्षकारकम् ॥ दत्तात्रेय प्रसादेन नारदेन प्रकीर्तितम् ॥ १८ ॥ ॥ इति श्रीनारदपुराणे देवर्षिणाविरचितं दत्तात्रेयस्तोत्रं संपूर्णम् ॥ श्रीदत्तात्रेयार्पणमस्तु ॥ १८ ॥

---

## ॥ अथ श्रीदत्तस्तोत्रम् ॥

( श्रीभृगुविरचितम् )

श्रीगणेशाय नमः ॥ बालार्कप्रभमिंद्रनीलजटिलं भस्मांगरागोज्वलं शांतं नादविलीनचित्तपवनं शार्दूलचर्मांबरम् ॥ ब्रह्मज्ञैः सनकादिभिः परिवृतं सिद्धैस्समाराधितं आत्रेयं समुपास्महे हृदि मुदा ध्येयं सदा योगिभिः ॥ १ ॥ दिगंबरं भस्मविलेपितांगं चक्रं त्रिशूलं डमरुं गदां च ॥ पद्मासनस्थं शशि-सूर्यनेत्रं

॥७९॥

दत्तात्रयं ध्येयमभीष्टसिद्धये ॥ २ ॥ ॐनमो श्रीगुरुं दत्तं दत्तदेवं जगद्गुरुम् ॥ निष्कलं निर्गुणं वंदे दत्तात्रेयं नमाम्यहम् ॥ १ ॥ ब्रह्मा लोकेश भूतेश शंख-चक्र-गदाधरम् ॥ पाणिपात्र धरं देवं दत्तात्रेयं० ॥ २ ॥ सुरेशवंदितं देवं त्रैलोक्यलोकवंदितम् ॥ हरी-हरात्मकं वंदे दत्ता० ॥ ३ ॥ निर्मलं नीलवर्णं च सुंदरं श्यामशोभितम् ॥ सुलोचनं विशालाक्षं दत्तात्रेयं० ॥ ४ ॥ त्रिशूलं डमरुं मालां जटामुकुटमंडितम् ॥ मंडितं कुंडलं कर्णे दत्ता० ॥ ५ ॥ विभूतिभूषितं देहं हार-केयूरशोभितम् ॥ अनंतप्रणवाकारं श्रीद० ॥ ६ ॥ प्रसन्नवदनं देवं भुक्ति-मुक्तिप्रदायकम् ॥ जनार्दनं जगत्त्राणं दत्ता० ॥ ७ ॥ राजराजं मिताचारं कार्तवीर्यवरप्रदम् ॥ सुभद्रं भद्र कल्याणं दत्तात्रेयं

नमाम्यहम् ॥ ८ ॥ अनसूयाप्रियकरं अत्रिपुत्रं सुरेश्वरम् ॥
विख्यात योगिनां मोक्षं दत्ता० ॥ ९ ॥ दिगंबरतनुं श्रेष्ठं ब्रह्म-
चर्यव्रते स्थितम् ॥ हंसं हंसात्मकं नित्यं दत्ता० ॥ १० ॥
कदा योगी कदा भोगी बाललीलाविनोदकः ॥ दशनै रत्नसं-
काशः द० ॥ ११ ॥ भूतबाधाभवत्रासो ग्रहपीडा तथैव च ॥
दरिद्रव्यसनध्वंसी द० ॥ १२ ॥ चतुर्दश्यां बुधे वारे जन्म
मार्गशिरे शुभे ॥ तारकं विपुलं वंदे द० ॥ १३ ॥ रक्तोत्पलदळं
पादं सर्वतीर्थसमुद्भवम् ॥ वंदितं योगिभिः सर्वैर्दत्तात्रे० ॥१४॥
ज्ञानदाता प्रभुः साक्षाद्भतिर्मोक्षप्रदायिने ॥ आत्मभूरीश्वरः
कृष्णः दत्ता० ॥ १५ ॥ भृगुविरचितमिदं दत्तात्रेयपारायणा-
न्वितम् ॥ साक्षाद्यद्दत्स्वयं ब्रह्मा द० ॥ १६ ॥ प्राणिनां सर्व-



जंतूनां कर्मपाशप्रभंजनम् ॥ दत्तात्रेयस्तुति-स्तोत्रं सर्वान्कामा-
नवाप्नुयात् ॥ १७ ॥ अपुत्रो लभते पुत्रं धन-धान्यसमन्वितः ॥
राजमान्यो भवेल्लक्ष्मीं अप्राप्तिः प्राप्तिसंभवान् ॥१८॥ त्रिसंध्यं
जपमानस्तु दत्तात्रेयस्तुतिं सदा ॥ तस्य रोगभयं नास्ति
दीर्घायुर्विजयी भवेत् ॥ १९ ॥ कूष्मांड-डाकिनी-पक्ष-पिशाच
ब्रह्मराक्षसाः ॥ स्तोत्रस्य श्रुतमात्रेण गच्छंति नात्र संशयः ॥ २० ॥
एतान् विंशतिश्लोकान्वै आवर्तिं कुरु विंशतिम् ॥ तस्यावर्तसह-
स्राणि दर्शनं नात्र संशयः ॥ ॥ इति श्रीभृगुविरचितं दत्त-
स्तोत्रं संपूर्णम् ॥ श्रीदत्तात्रेयार्पणमस्तु ॥ ॥ १९ ॥ ॥

---

## अथ श्रीदत्तवज्रकवचम्

श्रीगणेशाय नमः ॥ ऋषय ऊचुः—कथं संकल्पसिद्धिःस्याद्वेदव्यास कलौयुगे ॥ धर्मार्थ-काम-मोक्षाणां साधनं वेदसंमतम् ॥ १ ॥ श्रीव्यास उवाच—शृण्वंतु मुनयः सर्वे शीघ्रं संकल्पसाधनम् ॥ सकृदुच्चारमात्रेण भोगमोक्षविधायकम् ॥२॥ गौरीशृंगे हिमवतः कल्पवृक्षोपशोभिते ॥ दिव्यदीप्तमहारत्ने हेममंटपमध्यतः॥३॥ रत्नसिंहासनासीनं प्रसन्नं परमेश्वरम् ॥ मंदस्मितमुखांभोजं शंकरं प्राह पार्वती ॥ ४ ॥ पार्वत्युवाच—देवदेव महादेव लोक-शंकर शंकर—मंत्रजालानि सर्वाणि यंत्रजालानि कृत्स्नशः ॥५॥ तंत्रजालान्यशेषाणि मया त्वत्तः श्रुतानि वै ॥ इदानीं द्रष्टुमि-च्छामि विशेषाणि महीतले ॥ ६ ॥ इत्युदीरितमाकर्ण्य पार्वत्या



सह शंकरः ॥ ययौ भूमंडलं द्रष्टुं गौर्यै चित्राणि दर्शयन् ॥ ७॥ क्वचिद्विंध्याचलप्रांते महारण्ये सुदुर्गमे ॥ एवांस्याहर्तुमायांतं भिल्लं परशुधारिणम् ॥८॥ बाध्यमानं महाव्याघ्रं नखदंष्ट्राभिल-क्षितम् ॥ अतीत्य चित्रचरितं वज्रकायममारितम् ॥९॥ अप्रय-त्नमनायासं अखिन्नं सुखतःस्थितम् ॥ पलायंतं मृगं पश्चाध्व्या-घ्रभीत्या पलायितम् ॥ १० ॥ एतदाश्चर्यमालोक्य पार्वती प्राह शंकरम् ॥ किमाश्चर्यं किमाश्चर्यमग्रे शंभो प्रतीक्ष्यताम् ॥११॥ इत्युक्तः स तया शंभुर्दृष्ट्वा प्राह पुराणवित् ॥ गौरी वक्ष्यामि ते चित्रमवाङ्मानसगोचरम् ॥ १२ ॥ अदृष्टपूर्वमस्माभिर्नास्ति किंचिन्नकुत्राचित् ॥ मया सम्यक् समेनैव वक्ष्यामि श्रृणु पार्वति ॥ १३ ॥ अयं दूरश्रवा नाम भिल्लः परमधार्मिकः ॥

 

समित्कुश-प्रसूनानि कंद-मूल-फलादिकम् ॥ १४॥ प्रत्यह विपिनं गत्वा समाधाय प्रयासतः ॥ प्रीतिपूर्वं मुनींद्रेभ्यः प्रयच्छति नवांछति ॥ १५ ॥ तेपि तस्मिन्नतिदयां कुर्वते सर्वमौनिनः ॥ दलादनो महायोगी वसन्नेव निजाश्रमे ॥ १६ ॥ कदाचिदस्मरत्सिद्धं दत्तात्रेयं दिगंबरम् ॥ दत्तात्रेयः स्मर्तगामी प्रत्यहं संपरीक्षितुम् ॥ १७ ॥ तत्क्षणेनापि योगींद्रो दत्तात्रेय उपास्थितः ॥ तं दृष्ट्वाश्चर्य-तोषाभ्यां दलदानमहामुनिः ॥ १८ ॥ संपूजितं दत्तदेवं अवधूतमुवाच तम् ॥ ममोपचारैस्संप्राप्तो दत्तात्रेयो महामुनिः ॥ १९ ॥ स्मर्तृगामित्वमित्युक्त्वा किं वदंती परीक्षितुम् ॥ मयाऽद्य संस्मृतोसि त्वमपचारोयमेव च ॥ २० ॥ दत्तात्रेयो मुनिः प्राह मम प्रकृतिरीदृशी ॥ अभक्त्या वाथवा



भक्त्या यः स्मरेन्मामनन्यधीः ॥ २१ ॥ तदंतिकमुपागम्य ददामि तदभीप्सितम् ॥ यदिष्टं तद्वृणीष्व त्वं यत्प्राप्तोहं त्वया स्मृतः ॥ २२ ॥ दलादनमुनिः प्राह मया किमपि नोच्यते ॥ त्वच्चित्ते रोचते तन्मे प्रयच्छ मुनिपुंगव ॥ २३ ॥ ममास्ति वज्रकवचं गृहाणेत्यवदन्मुनिः ॥ तथेत्यंगीकृतवते दलादमुनये मुनिः ॥ २४ ॥ सवज्रकवचं प्राह ऋषि-च्छंदपुरस्सरम् ॥ न्यासं ध्यानं फलं तत्तत्प्रयोजनविशेषणम् ॥ २५ ॥ ॐ अस्य श्रीवज्रकवचस्तोत्रमहामंत्रस्य वै ऋषिः दत्तात्रेयो ख्यातः ॥ छंदोनुष्टुप् प्रकीर्तितम् ॥ देवताप्यहमेवास्य द्रांबीजमिति कीर्तितम् ॥ आंशक्तिः क्रौंकीलकम् स्यादोमात्मा ह्रीं मनो मम ॥ द्रांद्रींद्रूंद्रैंद्रौंद्रः ॥ ॐद्रां अंगुष्टकाभ्यांनमः ॥ ॐद्रीं तर्जनीभ्यां नमः ॥

ॐ द्रूं मध्यमाभ्याम् नमः ॥ ॐ द्रैं अनामिकाभ्याम् नमः ॥ ॐ द्रौं कनिष्ठिकाभ्याम् नमः ॥ ॐ द्रः करतलकरपृष्ठाभ्याम् नमः ॥ ॐ द्रां हृदयायनमः ॥ ॐ द्रीं शिरसेस्वाहा ॥ ॐ द्रूं शिखायैवौषट् ॥ ॐ द्रैं कवचायहुम् ॥ ॐ द्रौं नेत्रत्रयायवौषट् ॥ ॐ द्रः अस्त्रायफट् ॥ ॐभूर्भुवः स्वरोम् इति दिग्बंधः ॥ दत्तप्रसादसिध्यर्थे जपे विनियोगः ॥ ध्यानम्-वाराणसीपुरस्नायी कोल्हापूरजपादरः ॥ माहुरीपुरभैक्षाशी सर्पशायी दिगंबरः ॥१॥ इंद्रनीलसमाकारश्चंद्रकांतिसमोद्विजः ॥ वैदूर्यसदृशस्फूर्तिः अंचर्त्किंचिज्जटाधरः ॥२॥ स्निग्धधावल्यादिग्धांगो इंद्रनीलकनीनिकः ॥ भ्रूपक्ष्म-श्मश्रुनैल्यांकः शशांकसदृशाननः ॥३॥ हासनिर्जितनीहारः कंठनिर्जितकंचुकः ॥ मांसलांसो दीर्घबाहुः पाणिनिर्जितपल्लवः ॥४॥ विशालपीनवक्षस्कः पद्मपाणितलोदरः ॥ मृदुलश्रोणिललितो विशालजघनस्थलः ॥ ५ ॥ रक्तारविंदसदृशरमणीयपदाधरः ॥ चर्मांबरधरो योगी द्विषद्दारणदीक्षितः ॥ ६ ॥ सिद्धासनस्थोबलवान् ऋजुकायो हसन्मुखः ॥ वामहस्तेन वरदो दक्षिणेनाभयप्रदः ॥ ७ ॥ बालोन्मत्तपिशाचाभः क्वचिदुक्तं परीक्षितुम् ॥ त्यागी योगी महायोगी नित्यानंदो निरंजनः ॥ ८ ॥ सर्वरूपी सर्वदाता सर्वगः सर्वकालकः ॥ भस्मोध्दूलितसर्वांगो महापातकनाशनः ॥ ९ ॥ भुक्तिप्रदो मुक्तिदाता जपन्मुक्तिप्रदायकः ॥ एवं ध्यात्वानन्यचित्तो मद्वज्रकवचं पठेत् ॥१०॥ मामेव पश्यन् सर्वत्र स मया सह संचरेत् ॥ दत्तात्रेय उवाच—दत्तात्रेयो शिरः पातु सहस्राब्जसंस्थितः ॥ ११ ॥ फालं पात्वनसूयेयः चंद्रमंडलमध्यगः ॥

कूर्चं मनोमयः पातु हंक्षं द्विदलमध्यभूः ॥ १२ ॥ ज्योतिरू-
पोक्षिणी पातु शब्दम् शब्दात्मकः कृतीः ॥ नासिकां पातु गंधात्मा
मुखं पातु रसात्मकः ॥ १३ ॥ जिव्हां वेदकरः पातु दंतोष्ठं
पातु धार्मिकः ॥ कपोलावात्रिभूः पातु पात्वशेषं सदात्मभूः ॥
॥ १४ ॥ सर्वात्मा षोडशाराब्जस्थितश्चात्मावताद्गलम् ॥ स्कंधौ
चंद्रानुजः पातु भुजौ पातु कृतादिभूः ॥ १५ ॥ जत्रुणी शत्रु-
जित्पातु पातु वक्षस्थळं हरिः ॥ कादिठांतद्वादशारपद्मगो मरु-
दात्मकः ॥ १६ ॥ योगीश्वरेश्वरः पातु हृदयं हृदयेश्वरः ॥ पार्श्वौ
दूरः पार्श्ववर्ती पातु पार्श्वस्थितिर्मम ॥ १७ ॥ हठयोगादि-
योगज्ञः कुक्षी पातु कृपानिधिः ॥ डकारादिफकारान्तदशारसर-
सीरुहे ॥ १८ ॥ नाभिस्थळे वर्तमानो नाभिं वत्सात्मकोऽवतात्॥



वकारादिलकारांतं क्षदलांबुजबोधकः ॥ १९ ॥ जलतत्त्वमयो-
योगो रक्षतां मणिपूरकम् ॥ सिद्धासनसमासीन ऊरू सिद्धेश्व-
रोऽवतात् ॥ २० ॥ वादिसांतचतुःपत्रसरोरुहानिबोधकः ॥ मूला-
धारं महीरूपो रक्षताद्वीर्यनिग्रही ॥ २१ ॥ अर्षवद्दितयं पातु
जानुन्यस्त करांबुजः ॥ जंघे पात्ववधूतेंद्रः पात्वंघ्री तीर्थपावनः ॥
॥ २२ ॥ सर्वांगं पातु सर्वात्मा पातु रोमाणि केशवः ॥ चर्म
चर्मांबरः पातु रक्तं भक्तप्रियोऽवतात् ॥ २३ ॥ मांसं मांसकरः
पातु मज्जा स्वारात्मकोऽवतात् ॥ अस्थीनि स्थिरधीः पायात्
मेदो वेदाः प्रपालयेत् ॥ २४ ॥ शुक्लं सुखकरः पायात्संधींश्च
सुदृढाकृतिः ॥ मनोबुद्धिरहंकारं हृषीकेशात्मकोऽवतात् ॥ २५ ॥
कर्मेंद्रियाणि पात्वीशः पातु ज्ञानेंद्रियाण्यजः ॥ चंद्रो बंधूत्तमः

पातु शत्रुभ्यः पातु शत्रुजित् ॥ २६ ॥ गृहाराम-धन-क्षेत्र-पुत्रा-
दीन् शंकरोऽवतात् ॥ भार्यां प्रकृतिवत्पातु पश्वादीन् पातु
शार्ङ्गभृत् ॥ २७ ॥ प्राणान्पातु प्रधानज्ञो भूम्यादीन् भास्क-
रोऽवतु ॥ सुखं चंद्रात्मकः पातु दुःखात्पातु पुरांतकः ॥ २८ ॥
प्राच्यां विषहरः पातु पात्वाग्नेयां मखात्मकः ॥ याम्यां धर्मा-
त्मकः पातु नैऋत्यां पातु वैरिहृज्जित् ॥ २९ ॥ वाराहः पातु
वारुण्यां वायव्यां प्राणदोऽवतात् ॥ कौबेर्यां धनकृत्पातु पात्वै-
शान्यां महागुरुः ॥ ३० ॥ ऊर्ध्वं पातु महासिद्धः पात्वधस्ता-
ज्जटाधरः ॥ रक्षाहीनं तु मे स्थानं रक्षत्वादिमुनीश्वरः ॥ ३१ ॥
एतन्मे वज्रकवचं यः पठेच्छृणुयादपि ॥ वज्रकायश्चिरंजीवी
दत्तात्रेयोहमब्रुवम् ॥ ३२ ॥ त्यागी योगी महायोगी सुखदुःख-



विवर्जितः ॥ सर्वतः सिद्धसंकल्पो जीवन्मुक्तो भवेत्समः ॥ ३३ ॥
इत्युक्त्वांतर्दधे योगी दत्तात्रेयो दिगंबरः ॥ दलादनोपि तज्जप्त्वा
जीवन्मुक्तोद्य वर्तते ॥ ३४ ॥ भिल्लो दूरश्रवानाम तदानीं श्रुत-
वानिदम् ॥ सकृच्छ्रवणमात्रेण शुद्धांगोह्यभवत्तदा ॥ ३५ ॥
इत्येवं वज्रकवचं दत्तात्रेयस्य योगिनः ॥ श्रुत्वाशेषं शंभुमुखात्
पुनरप्याह पार्वती ॥ ३६ ॥ पार्वत्युवाच—एतत्कवचमाहात्म्यं वद
विस्तरतो मम ॥ कुत्र केन कदा जप्तम् कियज्जप्यं कथं प्रभो॥
॥३७॥ उवाच शंभुस्तत्सर्वं पार्वत्यै विनियोजनम् ॥ शृणु पार्वति
वक्ष्यामि समाहिततयाऽखिलम् ॥ ३८ ॥ धर्मार्थ-काम-मोक्षाणां
इदमेव परायणम् ॥ हस्त्यश्व-रथ-पत्यादिसर्वैश्वर्यप्रदायकम् ॥
॥ ३९ ॥ पुत्र-मित्र-कळत्रादिसर्वसंतोषसाधनम् ॥ वेद-शास्त्रादि

विद्यानां साधनं परमं मतम् ॥ ४० ॥ संगीतशास्त्रसाहित्यं सत्कवित्वविधायकम् ॥ सर्वसंतोषकरणं सर्वदुःखनिवारणम् ॥ ४१ ॥ शत्रुसंहारकृच्छीघ्रं यशः-सुकृतवर्धनम् ॥ अष्टसंख्या महारोगान् सन्निपातास्त्रयोदश ॥ ४२ ॥ तृणवत्कुक्षिरोगांश्च विंशतिर्मेहरोगवान् ॥ अष्टादशापि कुष्टानि गुल्मान्यष्टविधानपि ॥ ४३ ॥ अशीतिर्वातरोगांश्च चत्वारिंशाश्चपैत्यकाः ॥ विंशतिःश्लेष्मकारोगाः क्षय-चातुर्थिकादयः ॥ ४४ ॥ मंत्र-तंत्रप्रयोगोत्थशैलतंत्रादिनिर्मिताः ॥ ब्रह्मराक्षस-वेताळाः कूष्मांडादिग्रहोद्भवाः ॥ ४५ ॥ संघजा देशकालस्थाः यत्र यत्र यथोदिताः ॥ नवग्रहसमुद्भूताः महापातकसंभवाः ॥ ४६ ॥ सर्वे रोगाः प्रणश्यंति सहस्रावर्तना ध्रुवम् ॥ अयुतावृत्तिमात्रेण वंध्या पुत्रवती भवेत् ॥ ४७ ॥



अयुतद्वितयावृत्त्या अपमृत्युजयो भवेत् ॥ अयुतत्रयमात्रेण खेचरत्वं प्रजायते ॥ ४८ ॥ सहस्रादयुतादर्वाक् सर्वकर्माणि साधयेत् ॥ लक्षावृत्त्या भवत्येव कार्यसिद्धिर्नसंशयः ॥ ४९ ॥ सहस्रेणैव कार्याणि सिद्धिः स्यान्नात्र संशयः ॥ विषवृक्षस्य मूले तु तिष्ठन्यो दक्षिणामुखः ॥ ५० ॥ कुरुते मासमात्रेण वैरिणं विकलेंदियम् ॥ औदुंबरतरोर्मूले वृद्धिकामेन जप्यते ॥ ५१ ॥ श्रीवृक्षमूले श्रीकामैः तिंत्रिण्यां शांतिकामिभिः ॥ अश्वत्थमूले काम्यैश्च स्त्रीकामैः सहकारतः ॥ ५२ ॥ ज्ञानार्थं तुळसीमूले गर्भगेहे सुतार्थिभिः ॥ धान्यार्थिभिस्तु सुक्षेत्रे पशुकामैस्तु गोष्ठके ॥ ५३ ॥ देवालये सर्वकामैस्तत्काले सर्वदेशतः ॥ नाभिमात्रजले स्थित्वा भानुमालोक्य यो जपेत् ॥ ५४ ॥ युद्धे वा शास्त्रवादे

वा सहस्रेण जयो भवेत् ॥ कंठदघ्नजले रात्रौ यो वज्रकवचंपठेत ॥ ५५ ॥ अथापस्मारकुष्ठादितापज्वरनिवारणम् ॥ यत्र येन पदा यश्चरतियोगी चिरायुजः ॥ ५६ ॥ ॥ इति श्रीस्कंदपुराणे दलदान-दत्तसंवादे दत्तात्रेयवज्रकवचं सपूर्णम् ॥ ॥ २० ॥ श्रीदत्तात्रिः प्रसीदतु ॥ ॥ अस्य श्रीदत्तात्रेयएकाक्षरमंत्रस्य, सदाशिवऋषिः, गायत्रीच्छंदः, दत्तात्रेयो देवता, द्रांबीजं, मं शक्तिः, दत्तात्रेयेति कीलकं, दत्तात्रेयप्रसादसिध्यर्थे जपे विनियोगः ॥ द्रामित्यादिषडंगन्यासः ॥ योगारूढं योगपट्टोपवीतं हस्तद्वंद्वं जानुयुग्मे प्रसार्य ॥ अंसाग्रस्तंभव्यभूषाजटाकं दत्तात्रेयं भावयेद्वीक्षमाणम् ॥ इति ध्यानम् ॥ मनुः ॥ ॐ द्रां ॐ ॥ ॥ अस्य श्रीदत्तात्रेयषडक्षरीमंत्रस्य, सदाशिवऋषिः, गायत्रीच्छंदः,



दत्तात्रयो देवता, द्रांबीजं, श्रींशक्तिः, ऱ्हींकीलकं, दत्तात्रेय प्रसादसिध्यर्थे जपे विनियोगः ॥ ॐ अंगु०, श्रींतर्ज०, ऱ्हींमध्य०, क्लींअना०, ग्लौंकनि०, द्रांकर०, एवं हृदयादि ॥ ध्यानं–उत्तानिते करतळेप्यपसव्यसव्ये सोपानपर्वसदृशौरुपरि स्वनाभेः ॥ प्रस्तार्य चर्मवसनां भसितांगरागं मंत्री सितं भजत रक्तजटाकलापम् ॥ पंचपूजा ॥ मनुः ॥ ॐ श्रीं ऱ्हीं क्लीं ग्लां द्रां ॥ ॥ अस्य श्रीअष्टाक्षरीमंत्रस्य, शरभरूपी सदाशिवऋषिः, गायत्रीच्छंदः, दत्तात्रेयो देवता, द्रां बीजं, नमः शक्तिः, दत्तात्रेयायेति कीलकं, दत्तप्रसादसिध्यर्थे जपे विनियोगः ॥ द्रामित्यादिकरषडंगन्यासः ॥ षडक्षरमंत्रोक्तध्यानम ॥ उत्तानितकरतळेप्यपसव्यसव्ये सोपानपर्वसदृशौरुपरि स्वनाभेः ॥ प्रस्तार्य चर्मवसनां-

भसिताङ्गरागं मंत्रीसितं भजत रक्तजटाकलापम् ॥ पंचपूजा ॥ मनुः ॥ ॐ द्रां दत्तात्रेयाय नमः ॥ ॥ अस्य श्रीद्वादशाक्षरीमंत्रस्य शबररूपी श्रीसदाशिवऋषीः, गायत्रीच्छंदः, दत्तात्रेयो देवता, ॐ बीजं, स्वाहा शक्तिः, दत्तात्रेयेति कीलकं, दत्तप्रसादसिध्यर्थे जपे विनियोगः ॥ ॐ आं अं०, ॐ ऱ्हीं क्रों त०, ॐ एहि म०, ॐ दत्त अना०, ॐ आत्रेयाय कनि०, ॐ स्वाहा करतल०, एवं हृदयादि ॥ व्याख्यामुद्रा करसरसिजे दक्षिणे संदधानो जानुन्यस्तापरकरवरं तुर्यधामोन्नतांगः ॥ ध्यानाधानासुखपरवशावर्धमामीलिताक्षो दत्तात्रेयो भसितधवलः पातु नः कृत्तिवासः ॥ मनुः ॥ ॐ आं ऱ्हीं क्रों एहि दत्तात्रेयाय स्वाहा ॥ अन्यप्रकारः, द्वादशाक्षरमंत्रः ॥ सदाशिवऋषिः, जगतीच्छंदः,



श्रीदत्तात्रेयो देवता, ॐ बीजं, ऱ्हींशक्तिः, क्रोंकीलकं, दत्तप्र० जपे० ॥ ऱ्हामित्यादिकरषडंगः ॥ महादेवं त्रिनयनं भस्मोत्धूलितविग्रहम् ॥ चिन्मुद्रितकरांभोजं दत्तात्रेयं नमाम्यहम् ॥ पंचपूजा ॥ मनुः ॥ ॐ आं ऱ्हीं क्रों एहिदत्तात्रेयाय स्वाहा ॥ ॥ अस्य श्रीषोडशाक्षरीमंत्रस्य शरभरूपीरुद्रोऋषिः, अनुष्टुपूच्छंदः, दत्तात्रेयो देवता, द्रांबीजं, नमः शक्तिः, दत्तात्रेयायेति कीलकम्, दत्तप्र० जपे० ॥ द्रामित्यादिकरषडंगः ॥ ध्यानम् ॥ मंदारमूले मणिपीठसंस्थं सुवर्णदानैकनिबद्धदीक्षम् ॥ ध्यायेत्परीतं नवनाथसिद्धैः दारिद्र्यदावानलकालमेघम् ॥ मनुः ॥ ॐ ऐंक्लांक्लींक्लूं ऱ्हांऱ्हींऱ्हूंसौः दत्तात्रेयाय नमः ॥ ॥ अस्य श्रीविंशत्यक्षरीमंत्रस्य, सदाशिवोऋषिः, गायत्रीच्छंदः, दत्तात्रेयो

देवता, ॐ बीजं, नमः शक्तिः, दत्तात्रेयायेति कीलकं, दत्तात्रेय-प्रसादसिध्यर्थे जपेविनियोगः ॥ ॐ ऐं अं०, क्लांक्लींक्लूं तर्ज०, ऱ्हां-ऱ्हींऱ्हूं म०, सः अना०, दत्तात्रेयाय कनि०, विष्णवे नमः करतळ०, एंव हृदयादि ॥ मंदारमू० कालमेघम् ॥ पंचपूजा ॥ मनुः ॥ ॐ ऐं क्लांक्लींक्लूं ऱ्हांऱ्हींऱ्हूं सहदत्तात्रेयाय विष्णवे नमः ॥ ॥

अस्य श्रीदत्तात्रेयअनुष्टुभमंत्रस्य, सदाशिवऋषिः, अनुष्टुप्च्छंदः, दत्तात्रेयो देवता, द्रां बीजं, स्वाहा शक्तिः, दत्तात्रेयायेति कीलकम् ॥ दत्तात्रेयप्रसादसिध्यर्थे जपे विनियोगः ॥ दत्तात्रेयेति अं०, हरे कृष्णेति त०, उन्मत्तेति म०, आनंददायकेति अना०, दिगंबर मुने बालेति कनि०, पिशाचज्ञानसागर इति करतळ०, ध्यानं ॥ काशीकोल्ला० दिव्ययोगी दयाळुः, पंचपूजा ॥ मनुः ॥ ॐ दत्तात्रेय हरे कृष्ण उन्मत्तानंददायक ॥ दिगंबर मुने बाल पिशाच ज्ञानसागर ॥ ॥ अस्य श्रीदत्तात्रेयमहामंत्रस्य, विष्णूऋषिः, पंक्तीच्छंदः, श्रीदत्तात्रेयो देवता, ऱ्हां बीजं, ऱ्हीं शक्तिः, ऱ्हूं कीलकं, मम समस्तपापक्षयार्थे जपे विनियोगः ॥ ॐ ऱ्हां अं०, ॐ ऱ्हीं त०, ॐ ऱ्हूं म०, ॐ ऱ्हां अ०, ॐ ऱ्हीं क०, ॐ ऱ्हूं कर० ॥ एवं हृदयादि ॥ ध्यानम् ॥ दत्तात्रेयो महादेवो दत्तात्रेयो महागुरुः ॥ दत्तात्रेयादिवैकुंठनारायणमहं भजे ॥ मनुः ॥ ॐ ऱ्हां ऱ्हीं ऱ्हूं दत्तात्रेयाय नमः ॥ दशसहस्रजपात्सिद्धिः ॥ ॥ तद्दशांशो होमः ॥ तद्दशांशं तर्पणं ॥ तद्दशांशं ब्राह्मणभोजनम् ॥ पंचपूजा ॥

॥ समाप्तोयं ग्रंथः ॥

||३०||

हें पुस्तक मद्रास इलाखा गुंटूर जिल्हा नरसारावपेठ तालुका पातुरी लक्ष्मी नारायण शास्त्री योगीश्वर याणी बहु श्रमानें तयार करून सर्व प्रकारचे हक्कांसह आबाजी रामचंद्र सावंत यांना दिलें तें त्यांणीं बेळगांव येथें आपल्या "श्रीरातत्त्व प्रकाश" छापखान्यांत छापून प्रसिद्ध केलें.



शके १८२९ भाद्रपदमास, माहे सप्टेंबर सन १९०७ इसवी.

||९०||

